त्रेण पृश्निना। बध्नामि सत्यग्रन्थिना मनश्च हृदयञ्च ते। यदेतद्धृदयन्तव तदस्तु हृदयं मम। यदिदꣳ हृदयं मम तदस्तु हृदयन्तव। अन्नं प्राणस्य पड्विꣳशस्तेन बध्नामि त्वाऽसौ। अत्रासावित्येतस्य स्थाने सम्बोधनान्तं भार्यानाम गृह्णीयात्। ततोऽभिमन्त्रितस्याऽन्नस्यैकदेशं स्वयं भुक्त्वोच्छिष्टं पत्न्यै प्रयच्छेत्। अन्यदन्नं स्वयं पत्नी च तृप्तिपर्यन्तं भुक्त्वा हस्तौ पादौ च प्रक्षाल्याचम्य गोदक्षिणां ब्रह्मणे दत्वा वामदेव्यगानं कुर्यात्॥ इति समशनीयस्थालीपाकप्रयोगः॥

अर्थ—होम से बचे हुए चरु को चरुस्थाली से मेक्षण द्वारा निकाल कर दूसरे थाली या कटोरे में रख लेवे।" अन्न पासेन मणिना,, मन्त्रों को पढ़ता हुआ दाहिने हाथ से स्पर्श करे। मन्त्र के अन्त में "असौ" पद के स्थान पर संबोधनान्त वधू का नाम उच्चरण करे। उस अभिमन्त्रित हवि मे से कुछ खाकर शेष वधू को भोजन करने के लिए दे देवे। वधू तृप्ति पर्यन्त भोजन करे। दोनो हाथ पैर प्रक्षालन कर आचमन करें। ब्रह्मा को गौ दक्षीणा देकर वाम देव्य साम का गान करे। यही समशनीय स्थालीपाक की बिधि है।

विवाहोत्तरदिने समशनीयपक्षे, विवाहदिने रात्रावुपवासासमर्थ अन्नपाशेनेति परिजपितहविष्यमन्नं प्रथमं भुञ्जीत। यथेष्टं भुक्त्वा शेषमन्नं पत्न्यै प्रयच्छेत्। अस्मिन्पक्षे द्वितीयदिने होमशेषभक्षणं भवत्येव। विवा-

ह्यानन्तरं वधूर्भर्तृगृहगमनार्थं रथादिवाहनं यदाऽऽरोहति, तदा वरस्सुकिंशुकमित्यृचं पठेत् । अस्याः प्रजापतिर्ऋषिस्त्रिष्टुप्-छन्दः कन्या देवता रथारोहणे विनियोगः । सुकिंशुकंशल्मलिं विश्वरूपंसुवर्णवर्णंसुकृतंसुचक्रम् । आरोह सूर्य्ये अमृतस्य नाभिंस्योनं पत्ये वहतु कृणुष्व ।

अर्थ—यदि विवाह दिन से दूसरे दिन समशनीय स्थालीपाक करना हो और रात्रि में दम्पति उपवास न कर सकें तो "अन्नपाशेन०" मन्त्रों से हविष्य अन्न तभिमन्त्रित कर वर भोजन करे और जितने में वधू भोजन कर तृप्त हो सके उतने शेष अन्न वधू को दे देवे और वह भी हवि को भोजन करे । ऐसा करने पर दूसरे दिन समशनीय स्थालीपाक कृत्य सम्पन्न होगा । विवाह के पश्चात् वधू पति के गृह जाने के लिए किसी रथ सिविका आदि पर बैठे और वर वधू को सवारी पर बैठते हुए देखकर "सुकिँशुकम्" मन्त्र का पाठ करे ।

ततो वरो वध्वा सह मार्गगमनसमये मार्गस्थ चतुष्पथनदीसिंहव्याघ्रचोरादिभययुक्तस्थानानि, महावृक्षान्, श्मशानञ्च दृष्ट्वा माविदन्नित्येतन्मन्त्रं जपेत् । माविदन्निति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टूप्-छन्द आशास्यमाना देवता चतुष्पथाद्यनुमन्त्रणे विनियोगः । माविदन् परिपन्थिनो य आसीदन्ति दम्पती । सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः । ततो मार्गे रथचक्रस्य भङ्गे, योक्त्वा-

दिबन्धस्याश्वादेर्वा विमोक्ते, यानस्य विपर्य्यासे वा, चोरव्याघ्रादिनिमित्तवशात्संप्राप्तास्वापत्सु वौपासनाग्निं समिद्भिः प्रज्वाल्याज्यसंस्कारं कृत्वा पर्य्युक्ष्य व्याहृतिचतुष्टयं हुत्वा पुनस्तूष्णीं समिदाधानं कृत्वा पर्य्युक्षणमुदकाञ्जलिसेचनञ्च कृत्वा हुतशेषाज्येनान्यरथचक्रादिद्रव्यमानीयाभ्यञ्जेत् य ऋतेचिदिति मन्त्रेण । य ऋतेति मन्त्रस्य मेधातिथिर्ऋषिर्बृहतीछन्द इन्द्रो देवताऽभ्यञ्जने विनियोगः ।

२ ३१ २ ३ १२ ३ २ ३१ २ ३ १ २ १ २
य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । सन्धाता

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
सन्धिं मघवा पुरुवसुर्निष्कर्त्ता विहृतं पुनः । अभ्यक्तं संयोजयेत् । ततो वामदेव्यगानम् । अयं प्रायश्चित्तहोमो रथादिवाहनादवरुह्य भूमावेव कर्त्तव्यः । ततो वध्वा सह वरो यानमारुह्य गच्छेत् । ततो गृहसमीपे आगतं यानं ज्ञात्वा वरो वामदेव्यङ्गायेत् ।

अर्थ—वर वधू के साथ मार्ग में जाते समय मार्ग के चौराहे 'नदी' सिंह व्याघ्र, चोर पिप्पल आदि महावृक्ष, श्मशान आदि भय दायक प्राणी और स्थान देखकर "माविदन्न०" मन्त्र का जप करे । यदि रास्ते में जिस बग्गी या गाडी पर आते हों उसकी पहिया टूट जावे, अथवा काई बन्धन टूट जावे, अथवा सवारी उलट जावे या चोर व्याघ्रादि के कारण कोई आपत्ति आ पड़े तो ऐसी दशा में औपासन अग्नि मे समधि छोड़कर प्रज्वलित करे । आज्य संस्कार कर अग्नि वर्युक्षण करे व्याहृति मन्त्रों से चारि घृताहुति प्रदान करे । बिना मन्त्र एक समिध अग्नि में चढ़ा देवे । अग्नि का अनुपर्युक्षण कर उदकाञ्जलि

सेचन कर होम से बचे हुए घृत को दूसरे स्थाली में "यञ्जते०" मन्त्र को पढ़ते हुए लगा देवे और उसी को तैयार करे। वामदेव्य गान करे। यह-प्रायश्चित्तस्वरूप होम है। इसे उपरोक्त समय उपस्थित होने पर रथ रोक कर सम्पन्न करें। तद् पश्चात दूसरे रथ पर चढ़कर प्रस्थान करे। जब ग्राम के समीप पहुँचे तो वाम देव्य का गान करे।

ततोऽन्याः पतिपुत्रशीलसम्पन्ना ब्राह्मण्यो यानाद्वधूमवतार्य्य गृहं वृषभचर्म्मण्युपवेशयेयुः। उपवेशनसमये वर इह गावः प्रजायध्वमिति मन्त्रं पठेत्। मन्त्रान्ते उपवेशनम्। इह गाव इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्द आशास्यमाना देवतोपवेशने विनियोगः। इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः। इहो सहस्रदक्षिणोपि पूषा निषीदतु॥ १॥ ततस्ता एव ब्राह्मण्य उपविष्टाया वध्वा उत्सङ्गे चूडाकर्मरहितं कुमारं स्थापयेयुः। ततः कुमाराञ्जलौ कमलबीजान्यन्यानि फलानि वा क्षिपेयुः। ततः कुमारमुत्थाप्य संनिधावुपवेशयेत्। ततो वरो वध्वा सह धृतिहोमं करिष्ये। इति सङ्कल्प्य विवाहाग्निं प्रतिष्ठाप्याज्यतन्त्रेण व्याहृतित्रयहोमान्तं कृत्वा, इहधृतिरित्यादिभिरष्टावाज्याहुतीर्जुहोति। धृतिनाम्नेऽग्नेराह्वानम्। एषां मन्त्राणां प्रजापतिर्ऋषिर्बृहतीछन्दः कन्या देवता होमे विनियोगः। इह धृतिस्स्वाहा। इह स्वधृतिस्स्वाहा। इह रन्तिस्स्वाहा। इह रमस्व स्वाहा। मयि धृतिस्स्वाहा। मयि स्व धृतिस्स्वाहा।

मयि रमस्वाहा । मयि रमस्व स्वाहा । सर्वत्र कन्याया इदं न मम । पुनर्व्याहृतित्रयं हुत्वा तूष्णीं समिदाधानादियज्ञवास्त्वन्तं कर्म कृत्वा ब्रह्मणे दक्षिणां दत्वा गुर्वादीनभिवाद्य वामदेव्यगानं कुर्य्यात् । "केचित्तु तूष्णीं समिधमाधाय गुरुमातृपित्रादीनभिवाद्यानुपर्य्युक्षणादितन्त्रशेषं परिसमाप्य वामदेव्यगानमिति मन्यन्ते" ॥ इति धृतिहोमप्रयोगः ॥

अर्थ—गृह पहुँच जाने पर पति पुत्र शील स्वभाव सम्पन्ना ब्राह्मणी सवारी से वधू को उतार कर गृह में ले जाकर बैल के चर्म पर बैठावें । वधू को चर्म पर बैठने हुए देखकर वर "इह गाव" मन्त्र का पाठ करे । वे ब्राह्मणी गो चर्म पर बैठी हुई वधू के गोद में जिसका चूड़ाकरण संस्कार न हुआ हो ऐसे बालक को बैठा देवे । बालक के हाथ में कमलगट्टा नारियल आदि किसी फल को दे देवे । बालक को वधू के गोद से लेकर उसके समीप में बैठावे । वर वधू के साथ आचमन कर "धृति होम करिष्ये" वाक्य योजना कर संकल्प करे । विवाह अग्नि को स्थापन करे । आज्य का संस्कार कर भूः स्वाहा । अग्न० । भुवः स्वाहा । वायव० । स्वः स्वाहा । सूर्याय० । व्याहृतियों से तीन आहुति प्रदान करे । यहां पर धृति नाम से अग्नि का अवाहन करे । व्याहृति होम के पश्चात् "इह धृतिस्वाहा" इत्यादि मन्त्रों से आठ आहुति प्रदान करे । पुनः भूरादि व्याहृतियों से दो दो एवं छः आहुति प्रदान कर समिध प्रदान से यज्ञवास्तु तक कार्य सम्पन्न करे । ब्रह्मा को दक्षिणा प्रदान कर गुरुजनों का नमस्कार करे । वामदेव्य साम का गान करे । कुछ लोगों की सम्मति है कि समिध होक कर माता पिता आदि गुरु जनों के अभिवादन के

पश्चात् भद्रसूक्त, महाव्याहृति और वामदेव्य साम का गान करें। यही पुनि होम का प्रयोग है।

अथ चतुर्थीकर्मप्रयोग उच्यते। अत्र शिखिनामाग्निमादध्येत्। विवाहदिवसाच्चतुर्थी या तिथिस्सा चतुर्थी, चतुर्थदिनमिति यावत्। तस्मिन्दिने प्रातः प्राणानायम्य देशकालौ संकीर्त्यास्याः पत्न्या अलक्ष्म्यादिदोषापनुत्त्यर्थं प्रायश्चित्ताज्याहुतीर्होष्यामीति संकल्प्य, गृह्याग्नावाज्यतन्त्रेण व्याहृतित्रयहोमान्तेऽग्ने प्रायश्चित्त इत्यादिभिर्विंशतिमन्त्रैराज्याहुतीर्हुत्वाऽग्नेरुत्तरतः संस्थापिते जलपात्रे प्रत्याहुतिशेषं घृतबिन्दुमवनयेत्। सर्वेषां मन्त्राणां प्रजापतिऋषिर्यजुरग्निर्वायुश्चन्द्रमास्सूर्यस्तत्समष्टिश्च देवता प्रायश्चित्ताज्यहोमे विनियोगः ॥ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा। अग्नय इदं न मम। एवं वायो प्रायश्चित्ते, सर्वोऽप्यवशिष्टमन्त्रः पूर्ववत्। वायव इदं न मम। चन्द्र प्रायश्चित्ते० अपजहि स्वाहा। चन्द्रायेदं न मम। सूर्य प्रायश्चित्ते०। अपजहि स्वाहा। सूर्यायेदं न मम। अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयस्स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पापी लक्ष्मीस्तनूस्तामस्या अपहत स्वाहा। अग्नि-

वायुचन्द्रसूर्य्येभ्य इदं न मम। इति प्रथमपञ्चकम्। द्वितीये पञ्चके पूर्वोक्तेषु पञ्चसु मन्त्रेषु, पापी लक्ष्मीरिति पदद्वयस्थाने पतिघ्नीति पदं पठित्वा, पञ्च होमाः कर्त्तव्याः। एवं तृतीयपञ्चके। अपुत्र्या इति पठित्वा पञ्च होमाः। एव चतुर्थे पञ्चके अपसव्येति पदं पठित्वा पञ्चहोमाः।

अर्थ—अब चतुर्थी कर्म के प्रयोग को लिखते हैं। इस कर्म में शिखि नाम की अग्निका आवाहन करना चाहिए। विवाह के दिन से जो चतुर्थ दिवस परे वही इस कृत्य के करने का दिन है। उसी दिन प्रातः काल नित्य कृत्यों को समाप्त कर आचमन प्राणायाम करे। देश, काल, तिथि, वार आदि के स्मरण करने के पश्चात् "पत्न्या अलक्ष्म्यादि दोषापनुत्यर्थं प्रायश्चित्ताज्याहुतिर्होष्यामि" संकल्प करे। विवाहाग्नि में ब्रह्मवरण से आज्यसंस्कार तक कृत्य संम्पन्न करे। पर्युक्षण कर भूरादि व्याहृति से घृत की तीन आहुतियों को प्रदान करे। स्रुवा से घी ले ले कर "अग्ने प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्रह्मणस्त्वा नाथकाम उपधावामि यास्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा। अग्नय इदं न मम।

वायो प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा। वायव इदं न मम।

चन्द्र प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा। चन्द्राय इदं न मम।

सूर्य प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम

उपधावामि यास्याः पापी लक्ष्मीस्तामस्या अपजहि स्वाहा। सूर्याय इदं न मम।

अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयस्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पापी लक्ष्मीस्तनूस्तामस्या अपहत स्वाहा। अग्निवायुचन्द्रसूर्य्येभ्यः इदं न मम।

इति प्रथम पञ्चकः।

अग्ने प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पतिघ्नीस्तामस्या अपजहि स्वाहा। अग्नय इदं न मम।

वायो प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पतिघ्नीस्तामस्या अपजहि स्वाहा। वायव इदं न मम।

चन्द्र प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पतिघ्नीस्तामस्या अपजहि स्वाहा। चन्द्राय इदं न मम।

सूर्य्य प्रायश्चित्ते त्व देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पतिघ्नीस्तामस्या अपजहि स्वाहा। सूर्य्याय इदं न मम।

अग्निवायुचन्द्रसूर्या. प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयस्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पतिघ्नीस्तामस्या अपहत स्वाहा। अग्निवायुचन्द्रसूर्य्येभ्यः इदं न मम।

इति द्वितीय पञ्चकः।

अग्ने प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः अपुत्र्यास्तामस्या अपजहि स्वाहा। अग्नय इदं न मम।

वायो प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः अपुत्र्यास्तामस्या अपजहि स्वाहा । वायव इदं न मम ।

चन्द्र प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः अपुत्र्यास्तामस्या अपजहि स्वाहा । चन्द्राय इदं न मम ।

सूर्य प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः अपुत्र्यास्तामस्या अपजहि स्वाहा । सूर्य्याय इदं न मम ।

अग्निवायुचन्द्रसूर्य्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयस्स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पतिघ्नीस्तामस्या अपहत स्वाहा । अग्निवायुचन्द्रसूर्य्येभ्यः इदं न मम ।

इति तृतीय पञ्चकः ।

अग्ने प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधावामि यास्याः अपसव्यास्तामस्या अपजहि स्वाहा । अग्नय इदं न मम ।

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधावामि यास्याः अपसव्यास्तामस्या अपजहि स्वाहा । वायवे इदं न मम ।

चन्द्र प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधावामि यास्याः अपसव्यास्तामस्या अपजहि स्वाहा । चन्द्राय इदं न मम ।

सूर्य प्रायश्चित्ते त्वं देवनां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः अपसव्यास्तामस्या अपजहि स्वाहा । सूर्य्याय इदं न मम ।

अग्निवायुचन्द्रसूर्य्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयस्स्थ

ब्रह्मणो वो नाथकाम उपधावामि यास्याः अपसव्यास्तामस्या अपहत स्वाहा । अग्निवायुचन्द्रसूर्य्येभ्यः इदं न मम ।"

इन प्रत्येक आहुतियों के प्रदान करने के समय स्रुवा में लिपिटे हुए घृतविन्दुओं को जल पात्र में छोड़ता जावे एवं इन बीस आहुतियों को केवल घृत से प्रदान करे।

ततो व्याहृतिहोमाद्युपरिष्टात्तन्त्रं पूर्णपात्रदक्षिणादानान्तं परिसमाप्य, प्रदक्षिणनमस्कारं कृत्वा वामदेव्यं गायेत् । ततस्सम्पाताज्ययुक्तजलेन वधूं सर्वाङ्गमभ्यज्योद्वर्त्तयित्वा स्नापयन्त्यन्याः ॥ इति चतुर्थीकर्मप्रयोगः ॥

अर्थ—भूरादि व्याहृतियों से आहुति प्रदान कर वामदेव्य साम गान तक कृत्य सम्पन्न करे। जिस जल में घृत विन्दू छोड़ा गया है उसी जल को वधू के सर्वांग में लेपन करे। उपटन लगाकर शुद्ध जल से स्नान करा देवे। यही चतुर्थी कर्म का प्रयोग है।

विवाहे सर्वेषु होमेषु पूर्णाहुतिनिषेधः क्वचिद्दृश्यते । "विवाहे व्रतबन्धे च शालायां चौलकर्मणि । गर्भाधानादि संस्कारे पूर्णहोमन्न कारयेत्" । विवाहानन्तरमागामिपौर्णमास्यां दर्शपौर्णमासस्थालीपाकारम्भः । पौर्णमास्यां प्रातरौपासनं कृत्वा ब्राह्मणाननुज्ञाप्याभ्युदयिकश्राद्धं कुर्यात् । दर्शपौर्णमासस्थालीपाकावारप्स्ये, यावज्जीवं करिष्ये । नात्रान्वारम्भणीयस्थालीपाकः सूत्रकृताऽनुक्तत्वात् । पश्चात्पौर्णमासस्थालीपाकं कुर्यात् ।

**वैश्वदेवं पुण्ये नक्षत्रे तावदारभ्याहरहः सायम्प्रातः कुर्य्यात् ॥**

अर्थ—कहीं कहीं देखा जाता है कि विवाह सम्बन्धी सब होम कार्य्यों में पूर्णाहुति निषेध है। विवाह, उपनयन, गृही-प्रवेश, चूड़ाकरण, गर्भाधान, पुंसवनं, सीमन्त, आदि संस्कारों में पूर्णाहुति नही करना चाहिए। विवाह संस्कार के पश्चात् जो पूर्णमासी आवे उसी में दर्शपूर्णमासस्थालीपाक का आरम्भ करे। पौर्णमासी में प्रातः कृत्य करने के पश्चात् ब्राह्मण से आज्ञा लेकर आभ्युदयिक श्राद्ध करे। "दर्शपौर्णमासस्थालीपाक कर्म को आरम्भ करते हैं एवं जीवन पर्यन्त करते रहेंगे" ऐसी प्रतिज्ञा करे। इस दर्शपौर्णमास स्थालीपाक के आरम्भ करने में गृह्यसूत्र में अन्वारभणीय स्थालीपाक करना नही लिखा है। अतः उसका करना अनावश्यक है। पुण्य तिथि वार और नक्षत्र में वैश्वदेव का आरम्भ कर नित्य सायं प्रातः वैश्वदेव कार्य्य को करता रहे।

**अथ गर्भाधानप्रयोगः ॥ यदा भार्या ऋतुमतीस्यात्स्नातायां षोडशदिनादर्वाक् पुण्ये नक्षत्रे गर्भाधानं कुर्य्यात्। नात्रोदगयनपूर्वपक्षापेक्षा, ऋतोरनियतकालत्वात्। कालविलम्बे प्रायश्चित्तश्रवणाच्च।**

अर्थ—अब गर्भाधान का प्रयोग लिखा जाता है। इस संस्कार को तब करना चाहिए कि जब विवाह संस्कार के पश्चात् स्त्री ऋतु मती हो स्नान कर लेवे। ऋतु के आरम्भ दिन से १६ दिन के आभ्यन्तर पहले ४ दिवस को छोड़कर शेष किसी पुण्य तिथि-वार, नक्षत्रादि में गर्भाधान संस्कार करे। यह मानव शक्ति के बाहर है कि स्त्री को मासिक सूर्य उत्तरायण और शुक्ल पक्षमें ही

हो, अतः इस संस्कार में उत्तरायण और शुक्ल पक्ष की प्रतीक्षा नहीं की जा सकती। स्त्री के ऋतु स्नान कर लेने पर गर्भाधान संस्कार में विलम्ब करने से प्रायश्चित्त होता है।

गर्भाधानदिने प्रातर्गर्भाधानकर्माङ्गाभ्युदयिकश्राद्धं वक्ष्यमाणविधिना कुर्य्यात् । ब्राह्मणाननुज्ञाप्य गणेशञ्च सम्पूज्य, देशकालौ संकीर्त्य प्रतिगर्भसंस्कारायास्यामुत्पत्स्यमाना पत्यबीजगर्भसमुद्भवपापनिवृत्त्यर्थमिमां धर्म्मपत्नीं गर्भाधानकर्मणा संस्करिष्यामीति सङ्कल्प्य, मारुतनामगृह्याग्निं विधिवत्संस्थाप्याज्यतन्त्रेण व्याहृतिहोमान्तं कृत्वा, मनसा मन्त्रेणोपस्थाभिमर्शनं विभाव्योपरिष्टात्तन्त्रं समापयेत् । नात्रपूर्णाहुतिः ।

अर्थ—जिस दिन गर्भाधान करना हो उस दिन प्रातः काल ब्राह्मण की आज्ञा से गणेश की पूजा कर आभ्युदयिक श्राद्ध कृत्य सम्पन्न करे। देश काल आदि का स्मरण कर "प्रति गर्भ संस्कारायास्यामुत्पत्स्यमाना पत्यबीजगर्भसमुद्भवपापनिवृत्त्यर्थमिमां धर्म्मपत्नीं गर्भाधानकर्मणा संस्करिष्यामि" वाक्य की योजना कर संकल्प करे। पृष्ठ ८६ की विधि के अनुसार अग्निस्थापन करे। मारुत नाम अग्नि का आवाहन करे। पृष्ठ १६४ से १६८ के अनुसार चरु रहित केवल घृत का संस्कार कर "भूः स्वाहा" अग्नय इदन्न मम। 'भुवः स्वाहा' वायव इदन्न मम। स्वः स्वाहा, सूर्य्याय इदन्न मम"। इन घृताहुतियों को प्रदान करे। मन में मन्त्र को स्मरण करता हुआ उपस्थ स्पर्श कर शेष कृत्यों को सम्पन्न करे। इस होम कार्य में पूर्णाहुति कृत्य न होगा।

पुनः रात्रौ द्वितीययामे दक्षिणेन पाणिनोपस्थमभिमृशेत्। विष्णुर्योनिं कल्पयतु, गर्भं धेहि सिनीवालीतिऋग्भ्याम्। द्वयोर्मन्त्रयोः प्रजापतिर्ऋषिरनुष्टुप्छन्दो विष्णवादयो देवता उपस्थाभिमर्शने विनियोगः। विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्कर स्रजौ ॥ २ ॥ ततो यथाशास्त्रं यथारुचि तथा ग्राम्यधर्म्मः कार्य्यः॥ इति गर्भाधानप्रयोगः॥

अर्थ – पुन. दूसरे दिन रात्रि में दाहिने हाथ से "विष्णुर्योनि० गर्भंधेहि०" दोनो मन्त्रों को पढ़ा हुआ उपस्थ का अभिमर्शन करे। पश्चात् यथाभिरुचि संसारी व्यवहार करे। यही गर्भाधान संस्कार है।

अथ पुंसवनप्रयोगः॥ तृतीयस्य गर्भमासस्य प्रथम तृतीयभागे यत्पुण्यमहस्तत्र प्रातरेव पुंसवनं कुर्य्यात्। यद्युक्तकालातिपत्तिस्स्यात्तर्हि सर्वप्रायश्चित्ताहुतिं कृत्वा तत् कुर्य्यात्। इदं च प्रायश्चित्तमुपनयनादधः। "तदुक्तं 'कर्मप्रदीपे'। देवतानां विपर्य्यासे जुहोतिषु कथं? भवेत्। सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात्पुनः॥ १ ॥ संस्कारा अतिपत्येरन्नुक्तकाले कथञ्चन। हुत्वैतदेव कर्त्तव्या ये तूपनयनादधः" ॥ २ ॥ उपनयनस्योक्तकालाति-

पत्तौ व्रात्यस्तोमादिकं स्मृत्युक्तं प्रायश्चित्तं द्रष्टव्यम् ।

अर्थ—अब पुंसवन संस्कार की विधि लिखते हैं। गर्भ ग्रहण से तीसरे मास के पहले पक्षमें जो पुण्य तिथि नक्षत्रादि हो उसी दिन के प्रातः काल ही में पुंसवन संस्कार करे। यदि नियत समय पर न कर सके तो सर्व प्रायश्चित्त संज्ञक भूरादि आहुतियोंको प्रदानकर पश्चात् पुंसवन संस्कार करना चाहिए। कर्मप्रदीप में लिखा है कि उपनयन संस्कार से पहले यदि कोई संस्कार नीयत समय पर न होसके हों अथवा होम कार्य में किसी आहुति का विपर्यय अर्थात् आगे पिछे हो जावे तो इन्ही भूः आदि व्यहृतियों से प्रायश्चित्त संज्ञक घृत की आहुतियों को प्रदान कर पूर्वोक्त होम कार्य अथवा संस्कार कृत्यों को सम्पन्न करे। उपनयन संस्कार के नीयत समय व्यतीत होजाने पर तो स्मृति कारों ने व्रात्यस्तोम आदि प्रायश्चित्त वताया है। उनमें से किसी प्रायश्चित को निश्चित करे।

उदगग्रेषु दर्भेषूपविश्य घटोदकेन सशिरस्काऽऽप्लुता भवति। ततो यजमानः पत्न्या सह प्रातर्होमं विधाय पुंसवनकर्माङ्गाभ्युदयिकश्राद्धं पूर्वदिने न कृतं चेत्पुंसवनदिने कुर्य्यात्। ततः प्रातरेव ब्राह्मणाननुज्ञाप्य, प्राङ्मुख उपविश्योदगग्रेषु दर्भेषु स्वदक्षिणभागे प्राङ्मुखीं पत्नीमुपवेशयति। एवमेवोपवेशनं पत्न्यास्सर्वत्र कर्मसु। विशेषवचनादन्यत्रापि। ततो देशकालौसंकीर्त्त्यास्यां भार्य्यायां जनिष्यमाणगर्भाणां बैजिकगार्भिकदोषापनुत्तये इमां मम पत्नीं पुंसवनकर्मणा संस्करिष्यामीति संकल्प्य स्वपुरतः संस्कृते स्थण्डिले गृह्याग्निं संस्थाप्याज्यतन्त्रेण

पत्न्या सह व्याहृतित्रयहोमान्तं कुर्य्यात्। अत्र चन्द्रमसमग्निमावाहयेत्। ततोऽग्ने पश्चादुपविष्टायाः पत्न्याः पृष्ठतः पतिः प्राङ्मुखस्तिष्ठन्दक्षिणहस्तेन पत्नीदक्षिणमंसं तूष्णीमन्वभिमृश्य पुमा ँ सौ मित्रावरुणावित्येतयर्चा वस्त्रादिभिराच्छादितं पत्न्या नाभिदेशमभिमृशेत्। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो मित्रावरुणादयो देवता नाभिस्पर्शनेविनियोगः। पुमा ँ सौ मित्रावरुणौ पुमा ँ सावश्विनावुभौ। पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥ १ ॥

अर्थ—स्त्री उत्तराग्र कुशा पर बैठकर शीर के सहित घड़ा के जल से स्नान करलेवे। दम्पती पुंसवन संस्कार से एक दिन पहले अथवा उसी दिन प्रातः नित्य होमादि कृत्यों के पश्चात् पुण्याह वाचन आभ्युदयिकादि पुंसवन के अंग कार्य को सम्पन्न करें। प्रातः कालही ब्राह्मण की आज्ञा लेकर उत्तराग्र कुशासन पर पति और अपने दक्षिण पार्श्व में पूर्व मुख स्त्री को बैठावे। हरेक कर्म्मों में दम्पति के बैठने की यही रीति है। किसी किसी विशेष कार्यों में बैठने की विशेषता भी होती है। देश काल आदि के स्मरण करने के पश्चात् "यस्यां भार्य्यायां जनिष्यमाणगर्भाणां वैजिकगार्भिकदोषापनुत्तये इमां मम पत्नीं पुंसवनकर्मणा संस्करिष्यामि" वाक्य का योजना कर संकल्प करे। अपने पूर्व भाग में पृष्ठ ८९ में लिखी हुई विधि के अनुसार वेदिका का संस्कार कर गृह्याग्नि का स्थापन करे। चन्द्रमस नाम की अग्नि का आवाहन करे। पृष्ठ १६४ से १६८ तक में लिखी हुई विधि से चरु रहित आज्य का संस्कार करे। भूः स्वाहा, अग्नय इदं न मम।

भुवः स्वाहा, वायव इदन्न मम । स्वः स्वाहा, सूर्याय इदन्न मम" इन आहुतियों को प्रदान करे। अग्नि के पश्चिम पूर्वमुख बैठी हुई पत्नी के पीछे जाकर खड़ा होवे। विना मन्त्र पत्नी के दाहिने कन्धे को स्पर्श कर "पुमा सौ०" मन्त्र से वस्त्र से ढकी हुई नाभी का स्पर्श करे।

ततो व्याहृतित्रयहोमादि वामदेव्यगानान्तं कुर्य्यात्। पुनस्तस्मिन्नेव दिने शुङ्गाख्यमपरं पुंसवनकर्म कुर्य्यात्। दिनान्तरे चेन्नान्दीमुखश्राद्धं पुनः कुर्य्यात्। एकस्मिन्दिने चेत्पुंसवनद्वयाङ्गं सकृन्नान्दीश्राद्धमुभयोरादौ कुर्य्यात्।

अर्थ—पुनः भूः आदि व्याहृति मन्त्रों से घृत की आहुति प्रदान कर वामदेव्य साम गान तक कृत्य सम्पन्न करे। उसी दिन शुङ्गाख्य दूसरा पुंसवन संस्कार कृत्य को सम्पन्न करे। यदि यह दोनों पुंसवन संस्कार एकही दिन करना हो तो नान्दी (आभ्युदयिक) श्राद्धादि कार्य एकही वार होंगे। यदि दो दिन करे तो आभ्युदयिक श्राद्धादि अंग कृत्य भी दो वार करना चाहिए।

अथ पतिरेकविंशतिसंख्याकान्माषान् यवान्वा परिगृह्य, न्यग्रोधसमीपं गत्वा, यद्यसि सौमी सोमायत्वेत्यादिमन्त्रान्ते वटस्वामिने यवान्माषान्वा दत्वा, तदभावे वटमूले वा संस्थाप्य, वटस्येशान दिग्गतशाखाग्रस्थितमुभयतः फलं कीटाद्यदूषितमम्लानं शुङ्गाख्यम्मुकुलितपल्लवमोषधयस्सुमनस इत्युत्थाप्य

यज्ञियतृणैर्वेष्टयित्वा गृह्मानीयाकाशस्थाने स्थापयेत्। ससानां प्रजापतिर्ऋषिर्यजुश्शुङ्गा देवता शुङ्गापरिक्रयणे विनियोग.। ओषधयस्सुमनस इत्यस्य प्रजापतिर्ऋषिर्यजुरोषधयो देवताश्शुङ्गोत्थापने विनियोगः। यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि॥१॥ यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि ॥ २ ॥ यद्यसि वसुभ्यो वसुभ्यस्त्वा परिक्रीणामि ॥ ३ ॥ यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि ॥ ४ ॥ यद्यस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि ॥५॥ यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि ॥ ६ ॥ यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा परिक्रीणामि ॥ ७ ॥ ओषधयस्सुमनसो भूत्वाऽस्यां वीर्यꣳसमाधत्तेयं कर्म करिष्यतीति। इति शब्दान्तो मन्त्रः।

अर्थ—पति इक्कीस माष (उरद) अथवा यव लेकर किसी बट वृक्ष के निकट जावे। "यद्यपि सौमी" इन मन्त्रों को पढ़ता हुआ माष या यव को वृक्ष के स्वामी को दे देवे। यदि वृक्ष का स्वामी उपस्थित न हो तो वृक्ष के मूल भाग में रख देवे। बट वृक्ष की जो शाखा ईशान्य दिशा में फैली हो उसी के अग्रभाग के टूसा को "ओषधयस्सु०" मन्त्र को पढ़ता हुआ तोड़ लेवे। कुशा लपेट कर उचे स्थान पर रख देवे। यह टूसा ऐसी होनी चाहिए कि उस में दो फल लगे हों। कीड़े न काटे हों। मुरझाई न हो किन्तु विकशित हो "ओषधय०" यह इति शब्दान्त मन्त्र है अर्थात् इस मन्त्र के अन्त में इति शब्द है।

ततः सशिरस्कस्नातया पत्न्या सह ब्राह्मणाननुज्ञाप्य पुंसवनवत्संकल्पं कुर्य्यात्। तत औपासनाग्निं संस्थाप्याज्यतन्त्रेण ब्रह्मासनास्तरणादिव्याहृतित्रयहोमान्तं कुर्य्यात्। अथ शोभननामानमग्निमाह्वयेत्। ततो ब्रह्मचार्य्यनधीतवेदो ब्राह्मणः पतिव्रता कुमारी वा, अग्नेरुत्तरत आसादितदृषदं प्रक्षाल्य, तत्र पूर्वमाहृतां शुङ्गां संस्थाप्य (दृष) दुपल हस्ते गृहीत्वा तेनोद्धृत्य पेषणं कुर्य्यात्। ततोऽग्नेः पश्चादुदगग्रेषु दर्भेषु प्राक्शिरस्कामुत्तानां पत्नीमुपवेशयति। ततः पत्न्याः पश्चात्पतिस्स्थित्वा शुङ्गां दक्षिणहस्ताङ्गुष्ठानामिकाभ्यामभिसंगृह्य, पत्न्या दक्षिणनासिकारन्ध्रे शुङ्गारसमवनयेत्पुमानग्निरित्येतयर्चा। अस्याः प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्न्यादयो देवता श्शुङ्गारसावनयने विनियोगः। पुमानग्निः पुमानिन्द्रः पुमान्देवो बृहस्पतिः। पुमाꣳसं पुत्रं विन्दस्व तं पुमाननुजायताम्। ततस्तामुत्थाप्य व्याहृतित्रयं हुत्वोपरिष्टात्तन्त्रं समापयेत्। इत्यपरपुंसवनप्रयोगः॥

अर्थ—शिर के सहित स्नान की हुई पत्नी के साथ ब्राह्मण की आज्ञा लेकर पुंसवन संस्कार के अनुसार संकल्प करे। अग्नि स्थापन कर शोभन नाम अग्नि का आवाहन करे। ब्रह्मोपवेशन से भूः आदि आहुतियों को केवल आज्य से संपन्न करे। किसी ब्रह्मचारी अथवा ब्राह्मण जाति की पतिव्रता कन्या से अग्नि के उत्तर पहले से रक्खे हुए सील और लोढ़ा को धोकर उसी पर लाए हुए वट वृक्ष के

टूसा को पिसवा लेवे। अग्नि के पश्चिम उत्तराग्र कुशासन पर बैठी हुई पत्नी के पृष्ठ भाग में बैठ कर पति अपनी गोदी में उत्तान झुकाकर दाहिने हाथ की अङ्गुष्ठ और अनामिका अङ्गुलियों से ले कर "पुमानग्नि०" मन्त्र को पढ़ता हुआ टूसे के रस को पत्नी के दाहिने नासिका के छिद्र में छोड़ देवे। इस कृत्य के पश्चात् पुनः व्याहृति मन्त्र से घृताहुति प्रदान कर वामदेव्य साम के गान तक कृत्यों को सपन्न करे यही दूसरा पुंसवन संस्कार है।

अथ सीमन्तोन्नयनप्रयोगः। अत्र सूत्रम्। "प्रथमगर्भे चतुर्थे मासि षष्ठेऽष्टमे वा"। सूत्रोक्तान्यतममासे पूर्वपक्षे पुण्ये नक्षत्रे तत्करिष्यन् पूर्वदिने तद्दिने वा, तदङ्गमाभ्युदयिकश्राद्धं कुर्य्यात्। प्रातरुदगग्रेषु दर्भेषूपविश्य चतुर्भिः कलशैराप्लुत भवति।। पत्न्या सह प्रातरौपासनं कृत्वा ब्राह्मणाननुज्ञाप्य पवित्रपाणिः प्राणानायम्य संकल्पं करोति। तद्यथा। अस्यां भार्यायां जनिष्यमाणगर्भाणां बैजिकगार्भिकदोषापनुत्तये इमां मम पत्नीं सीमन्तोन्नयनकर्मणा संस्करिष्यामि। तत औपासनाग्नावाज्यतन्त्रेण व्याहृतिहोमान्तं कुर्य्यात्। पात्रप्रयोगे विशेषः। अग्नेरुत्तरतः प्रकृतिवत्स्रुवाज्यस्थाल्यादिकमासाद्य चतुरादियुग्मफलयुतौदुम्बरनीलस्तबकं नूतनतन्तुग्रंथितं, तिस्रो दर्भपिञ्जलीस्सूत्रकर्त्तनलोहशलाकां, त्रिश्वेतां शललीं, तिलमिश्रिततण्डुलाश्चासादयेत्। कर्मकालेऽग्नेः पश्चादुदगग्रेषु दर्भेषु भर्तुर्दक्षिणतः प्राङ्मुख्यु-

पविशति । द्विः प्रक्षालितांस्तिलमिश्रिततण्डुलान्निर्वा-परहितानग्नौ श्रपयित्वाऽग्नेरुत्तरत आसादयेत् ।

अर्थ—अब सीमन्तोन्नयनयन संस्कार का प्रयोग लिखा जाता है। सूत्रकार गोभिलाचार्यने लिखा है कि यह संस्कार प्रथम वार गर्भ रहने पर चौथे, छठवें अथवा आठवे मास में करना चाहिए। उपरोक्त मासों मेसे जिसमें सुविधा हो शुक्ल पक्ष की पुण्य तिथि वार नक्षत्रादिमें करना चाहिए। सीमन्तोन्नयन संस्कार जिस दिन करना हो उससे एक दिन पहले अथवा उसी दिन प्रातः काल नित्य होमादि कृत्य को समाप्त कर पुण्याह वाचन आभ्युदयिक श्राद्ध कार्य सम्पन्न करे। उत्तराग्र कुशासन पर बैठकर चार घड़े जल से स्नान करावे। पति पत्नी के सहित प्रातः औपासन कृत्य को समाप्त करे। ब्राह्मण से आज्ञा लेकर पवित्र धारण करे। आचमन और प्राणायाम कर "अस्यां भार्य्यायां जनिष्यमाण गर्भाणां बैजिकगार्भिकदोषापनुत्तये इमां मम पत्नी सीमन्तोन्नयन कर्मणा संस्करिष्यामि" वाक्य योजना के साथ संकल्प करे। औपासन अग्नि में चरुरहित आज्य तन्त्र आरम्भ करे। पात्रासादन में आज्यस्थालो के पश्चात् फल युक्त गूलर और सतालू के गुच्छे, नया सूत लपेटी हुई कुशा की तीन पिञ्जुली, सूत कातने वाला टेकुआ, साही के कांटे, तिल मिला हुआ चावल आसादन करे। अग्नि के पश्चिम पति के दाहिने पार्श्वमें उत्तराग्र कुशासन पर पूर्व मुख पत्नी बैठे। तिल मिश्रित चावलको दो वार धोकर भात पकालेवे। पक जाने पर अग्नि से उतार कर अग्नि कुण्ड से उत्तर रख देवे ।

अत्र मङ्गलाभिधोऽग्निः। ततो व्याहृतिहोमान्तेऽग्नेः पश्चात्पतिस्तिष्ठन् पूर्वमासादितमौदुम्बरशलाटुग्रंथमयमू-

र्ज्जीवतो वृक्ष इतिमन्त्रेण पत्न्याः कण्ठ आबध्नाति । अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्द उदुम्बरो देवतौदुम्बर-शलाटुग्रन्थिबन्धने विनियोगः । अयमूर्ज्जावत्तो वृक्ष ऊर्ज्जीव फलिनीभव ।

अर्थ—अग्निमे समिध छोड़ कर पृष्ठ १६८ के अनुसार अग्नि का पर्युक्षण करे । मंगलाभिधोनाम अग्नि का आवाहन करे । "तपश्च तेजश्च०" आदि मन्त्रों को पढ़ने के पश्चात् "भूः स्वाहा, अग्नय इदन्न मम । भुवः स्वाहा, वायव इदन्न मम । स्वः स्वाहा, सूर्य्याय इदन्न मम" मन्त्रों से तीन घृताहुतियों को प्रदान करे । पति पत्नी के पीछे खड़ा होकर पहले से रखे हुए गूलर के फलों को "अयमूर्ज्जावतो०" मन्त्र को पढ़ता हुआ उसके गले में बान्ध देवे ।

पर्णं पनसपते नुत्वाऽनुत्वा सूयता ँरयिः ॥ १ ॥ ततस्तस्मिन्नेव स्थाने पतिर्दर्भपिञ्जलीस्समादाय भूरिति मन्त्रेण प्रथमं सीमन्तमूर्ध्वं नयति । ताभिरेव पिञ्जली-भिर्भुवरिति द्वितीयं, स्वरिति तृतीयम् । व्याहृतीनामृ-षिच्छन्दोदेवताः प्रसिद्धाः । पुनश्शरं वीरतराख्यतरुविशेषं वाऽऽदाय सीमन्तमूर्ध्वमुन्नयति येनादितेरितिमन्त्रेण । अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः प्रजापतिर्देवता सीमन्तोन्नयने विनियोगः । येनादितेस्सीमानं नयति प्रजापतिर्महते सौभगाय । तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि ॥ १ ॥ ततस्सूत्रकर्त्तनलोह-

मयशलाकया राकामहमितिमन्त्रेण सीमन्तमुन्नयति। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो राका देवता सीमन्तोन्नयने विनियोगः। राकामहꣳसुहवाꣳसुष्टुनी हुवे शृणोतु नस्सुभगा बोधतु त्मना। सीव्यत्वपस्सूच्या छिद्यमानया ददातु वीरꣳशतदायु मुख्यम् ॥ १ ॥ ततस्त्रिस्थानश्वेतया शलल्या सीमन्तमुन्नयति यास्ते राक इतिमन्त्रेण। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो राका देवता सीमन्तोन्नयने विनियोगः। यास्ते राके समतयस्सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳसुभगे रराणा ॥ १ ॥ एकैकेन द्रव्येण सीमन्तमुन्नीय तन्निरस्याप उपस्पृश्यान्येन सीमन्तमुन्नयेत्।

अर्थ कुश पिञ्जुलि लेकर "ओंभूः उन्नयामि 'ओं भुवः उन्नयामि' ओं स्व. उन्नयामि" मन्त्रो का ऋषि देवता छन्द और विनियोग पढ़ता हुआ कुश पिञ्जुलियों से मन्त्र के क्रम से तीन वार केश को ऊपर को झार देवे। पुनः वीर तरु नाम से प्रसिद्ध वृक्ष के काष्ट को लेकर 'येनादिते०" मन्त्र को पढ़ता हुआ माँग को झार देवे। तत् पश्चात् "राकामहम्०" मन्त्र को पढ़ता हुआ टेकुआ से माँग को झार देवे। "यास्तेराका०" मन्त्र को पढ़ता हुआ साही के कांटों से सीमन्त का उनयन करे। पूर्वोक्त रीत्यानुसार एक एक वस्तुओं से मन्त्रों को अलग अलग पढ़ते हुए शिर के बालों को झार कर ठीक कर देवे। जल का स्पर्श कर केशों को भली भांति झार देवे।

अथ कृशरस्थालीपाकमादाय तत्रावेक्षणयोग्यं घृतमवसिच्य तं पत्नीं प्रदर्शयेत् । पतिस्स्थालीपाकघृतं पश्यन्तीं पत्नीं किं ? पश्यसीति पृष्ट्वा प्रजां पशून् सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युरिति पत्नीं वाचयेत् । नात्र छन्दो यजुष्ट्वात् । विनियोगः प्रसिद्धः । येन मन्त्रेण यत्कर्म क्रियते तस्य तत्र विनियोगो न्याय्यः । ततोऽवेक्षितचरोर्भोजनं मेक्षणेन पात्रान्तरे उद्धृत्य पत्नी कुर्य्यात् । भोजनसमये वीरसूस्त्वं जीवसूस्त्वं पत्नी त्वं भवेति मङ्गलगिरोऽन्या ब्राह्मण्यो वदेयुः । ततो व्याहृतित्रयहोमादितन्त्रशेषं समापयेत् । "केचित्तु तन्त्रपरिसमाप्त्यनन्तरं पत्न्या कृशरचरुभक्षणं कार्यं, कर्ममध्ये भोजनाप्रसक्तेर्हुतशेषाभावाच्चेति वदन्ति" ।

अर्थ—तिल छोड़ कर पकाए हुए भात को पत्नी के आगे रक्ख देवे । उसमें इतना घी छोड़े कि उससे भात ढक जावे । पत्नी को घृत देखने की आज्ञा देवें । उसे पूछे कि क्या देखती हो और पत्नी जब कहे कि हाँ देख रही हूँ तो पति "प्रजाम्पशून् सौभाग्यं मह्य दीर्घायुष्ट्वं-पत्युः" को पढ़े । इस मन्त्र का कोई छन्द नही है । यह तो प्रसिद्ध ही है कि जिस मन्त्र से जो कार्य किया जाता है उसमें उसका विनियोग करना उचित है। मेक्षण द्वारा भात को थाली अथवा कसोरे में लेकर पत्नी उसे भोजन करे । पत्नी के भोजन के समय कोई एक ब्राह्मणी "तुम वीर और दीर्घ जीवी पुत्र को उत्पन्न करने वाली होवो" ऐसा आशीर्वाद देवें । भोजन के पश्चात् मुख और हाथ को धोकर आचमन करे । पति "भूः स्वाहा, अग्नय इदन्न मम । भुवः स्वाहा, वायव इदन्न

मम। स्वः स्वाहा, सूर्य्याय इदन्न मम"। इन घृत आहुतियों को प्रदान करे। पृष्ट ७३ में लिखी हुई विधियों को वामदेव्य सामगान तक सम्पन्न करे। कुछ लोगों की सम्मति है कि हवन कार्य के पहले ही तिल युक्त चावल के भात को पका कर पत्नी भोजन कर लेवे। जब इस भात की आहुति नही दी जाती है तो होम कार्य के मध्यमें होमशेष के समान भोजन करना अनावश्यक प्रतात होता है।

एतच्च सीमन्तोन्नयनं प्रथमगर्भे, उत? द्वितीयगर्भादावपि। "अत्र वदन्ति 'प्रतिगर्भमावर्त्तनीयमेतत्'। अन्यथा गौतमादिभिः प्रतिपुरुषं परिगणितगर्भाधानाद्यष्टाचत्वरिंशत्संस्कारविरोधापत्ते."। परे तु, 'न तत्प्रतिगर्भमावर्त्तनीयं' "सीमन्तकरणं प्रथमे गर्भे" इति गोभिलाचार्य्यैस्सूत्रितत्वात्। नच द्वितीयापत्यादेस्संस्कारन्यूनतेति शङ्कनीयम्। गर्भपात्रसंस्कारेण तत्र जातानामपत्यानामपि संस्कृतत्वात्। "यत्तु सीमन्तकरणं प्रथमे गर्भे" इति सूत्रकृदुक्त्या गर्भाधानपुंसवनयोः प्रतिगर्भमावृत्तिरिति तन्न। तयोरपि पात्रसंस्कारकत्वात्। अत एव गर्भाधाने दक्षिणेन पाणिनोपस्थमभिमृशेदित्युक्तः पात्रसंस्कारस्सङ्गच्छते "भट्टनारायणादयोऽपि 'सकृत्संस्कृते स्त्रीद्रव्ये यो यो गर्भ उत्पद्यते स संस्कृतो भवति तस्मात्सकृदेव स्याद्गर्भाधानसंस्कारो नतु प्रतिगर्भ मिति। एवं पुंसवनसीमन्तोन्नयनयोरपि द्रष्टव्यमित्याहुः'। तत्र प्रमाणवचनानि तत्रैव द्रष्टव्यानि ग्रन्थवि-

स्तरभयान्नोच्यन्तेऽस्माभिः ॥ इति सीमन्तकरण-प्रयोगः ॥

अर्थ—यह सीमन्तोन्नयन संस्कार केवल प्रथम गर्भ रहने के समय करना चाहिए या हरेक गर्भ के समय करना उचित है? यह विषय विचारणीय है। कुछ लोगों का मत है कि सीमन्तोन्नयन संस्कार प्रत्येक गर्भ में आवश्यक है। क्योंकि गौतम आदि स्मृतिकारोंने हरेक द्विज पुरुषों के लिए चालीस संस्कार का उल्लेख किया है। उसमें सीमन्तोन्नयन भी सम्मिलित है। यदि प्रत्येक गर्भ में यह संस्कार न किया जावे तो स्मृतियों में उक्त ४० संस्कार हर एक पुरुष के पुरा नहीं हो सकते। गोभिलाचार्य ने इस संस्कार को प्रथम ही गर्भ में करना लिखा है परन्तु यदि प्रत्येक गर्भ में सीमन्त न किया जावे तो सब सन्तान ४० संस्कारों से संस्कृत न होंगे

दूसरे-ऐसा नहीं है। गर्भाशय के संस्कृत हो जाने के कारण उस गर्भ से जितने सन्तान उत्पन्न होंगे-सब संस्कार युक्त होंगे। जो गोभिलाचार्य ने लिखा है कि "सीमन्तोन्नयन संस्कार प्रथम ही गर्भ के समय करना चाहिए" इससे सीमन्तोन्नयन संस्कार काही प्रथम गर्भ के समय करना नहीं समझना चाहिए। किन्तु गर्भाधान और पुसवन संस्कार करने की भी आवश्यकता प्रथम ही वार है। अतः इन्हें भी वार वार करने की आवश्यकता नहीं है। यही मत नारायण भट्टाचार्य टीकाकार का है कि "एक वार उक्त गर्भाधान, पुंसवन और सीमन्तोनयन सस्कारों से संस्कृत स्त्री के गर्भाशय से जो जो सन्तान उत्पन्न होती है वह सब संस्कार सम्पन्न होती है"। अतः गर्भाधान, पुंसवन और सीमन्तोन्नयन तीनो संस्कारो को एक ही वार करने की आवश्यकता है। वार वार नहीं।

ग्रन्थ विस्तार के कारण एतत् विषयक प्रमाण-वचनों को यहां बहुत अधिक नहीं उद्धृत करते हैं। प्रकरणानुसार स्मृत्यादि ग्रन्थों में देखे जा सकते हैं। यहां उपरोक्त सीमन्तोन्नयन संस्कार का प्रयोग है

अथ सोष्यन्तीहोमः ॥ यदि पत्न्यामन्नप्रसवोदरपीडायुक्ता भवेत्तज्ज्ञात्वा शीघ्र सुखप्रसवार्थं पत्न्या होमः कार्य्यः। योनिद्वारे स्थिते गर्भे सति, पत्न्याः शीघ्रं सुखप्रसवार्थमाज्याहुतीर्होष्यामीति संकल्प्य, पूर्ववदौपासनाग्निं संस्थाप्य तूष्णीं परिसमूह्य परिस्तीर्य्याज्यं संस्कृत्य पर्युक्ष्य, या तिरश्चीत्येताभ्यामाज्याहुतीः कुर्य्यात्। मन्त्रद्वयस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दस्संराधिनी धाता च देवता सुखप्रसवहोमे विनियोगः। या तिरश्ची निपद्यते अहं विधरणी इति। तांत्वा घृतस्य धारया यजे स ँ राधनीमहं स ँ राधिन्यै देव्यै देष्ट्र्यै स्वाहा। संराधिन्यै देव्या इदं न मम। विपश्चित्पुच्छमभरत्तद्धाता पुनराहरत्। परेहि त्वं विपश्चित्पुमानयञ्जनिष्यतेऽसौनाम स्वाहा। धात्र इदं न मम। असौनामेत्यत्र जनिष्यमाण पुत्रस्य यत्किञ्चिद्गुह्यं नाम परिकल्प्योच्चारयेत्। पुमानयं जनिष्यते रामनामास्वाहा। तत औपासनवदुपरिष्टात्तन्त्रं समापयेत्। नात्र स्थालीपाकवद्ब्रह्मोपवेशनसमिदाधानादिकम् ॥ इति सुखप्रसवप्रयोगः ॥

अर्थ—अब सोष्यन्ती नाम से प्रसिद्ध होम के प्रयोग लिखते हैं। जब स्त्री के उदर में बालक होने की पीड़ा होने लगे उसी समय इस सोष्यन्ती होम कार्य्य को करना चाहिए। प्रथम आचमन प्राणायाम कर "योनिद्वारेस्थिते गर्भे सति पत्न्याः शीघ्रं सुख प्रसवार्थमाज्याहुतीर्होष्यामि" वाक्य योजना के साथ संकल्प करे। पृष्ठ ८९ में लिखेऽनुसार अग्निस्थापन कर बिना मन्त्र परिसमूहन से पर्युक्षणान्त कृत्य सम्पन्न करे। केवल घृत से "या तिरश्ची०" इन दो मन्त्रों से दो आहुतियों को प्रदान करे। द्वितीय मन्त्र में "असौ" पद के स्थान में उत्पन्न होनेवाली संतान का कोई गुप्त नाम कल्पना करके उसी का उच्चारण करे अर्थात् "राम नाम का पुत्र उत्पन्न होवे" ऐसा स्मरण कर आहुति प्रदान करे। समिध होम कर बिना मन्त्र अनुपर्युक्षण करे। बस इतनाही कृत्य से इस हवन कार्य को समाप्त कर देवे। सोष्यन्ती होम कार्य में स्थालीपाक के अनुसार ब्रह्म वरण इध्मा और समिध होम, समन्त्रक पर्युक्षण, यज्ञ वास्तु इत्यादि कृत्य न होंगे। स्त्री को बालक उत्पन्न होने में अधिक कष्ट न हो उसी के लिए यह सोष्यन्ती हवन का प्रयोग है।

अथ जातकर्मप्रयोग ॥ जातं कुमारं श्रुत्वा नालच्छेदनं स्तन्यदानं चान्नप्राशनसमाप्तेः प्राङ्मा कुर्विन्युक्त्वा तूष्णीं दक्षिणोत्सङ्गे प्राङ्मुखं कुमारं संस्थाप्य, देशकालौ संकीर्त्यास्य कुमारस्य गर्भजलपानसंजातदोषापनुत्तये, बैजिकगार्भिकपापनिवर्हणाय च जातमिमं कुमारं जातकर्मणा संस्करिष्यामीति संकल्प्य, व्रीहियवौ शुक्लावज्ञलेन पेषयित्वा, दक्षिणाङ्गुष्ठानामिकाभ्यामभिगृह्य, कुमारस्य जिह्वायामियमाज्ञेतिमन्त्रेण "गार्ष्टि" ।

कुमारी चेदमन्त्रकमेतत्कर्म्म । अस्य प्रजापतिर्यजुरन्नं देवता मार्जने विनियोगः । इयमाज्ञेदमन्नमिदमायुरिदममृतम् । अत्र शिशोर्जिह्वायां प्रगल्भनामाग्निर्विभाव्यः । इति जातकर्मप्रयोगः ॥

अर्थ—अब जात कर्म संस्कार के प्रयोग को लिखते हैं। पितापुत्र का उत्पन्न होना सुनकर कह देवे कि स्तन्यदान और अन्न प्राशन के पहले नाल छेदन न करो। धान और यव को जल में पीस कर उसी जल से नवजात शिशु के जीभ का प्रक्षालन कर पश्चात् नार छेदन और माता के स्तन्य पान कराकर शिशु की रक्षा करो विना मन्त्र दाहिने बगल से गोद में पूर्व मुख बालक को रख देवे। देश काल आदि का स्मरण कर "अस्यकुमरस्य गर्भजलपानसंजातदोषापनुत्तये वैजिक गार्भिक पाप निवर्हणाय च जात मिमं कुमारं जात कर्मणा सस्करिष्यामि" वाक्य योजना के साथ सकल्प करे। धान और यव का पुंसवन संस्कार में बताई हुई वड शुंगा पेषण की विधि से पीस कर दाहिने हाथ के अंगुठे और अनामिका अंगुलियो से लेकर "इयमाज्ञेदमन्नमिदमायुरिदममृतम्"। मन्त्र से बालक के जीभ को धो देवें। बालक के जीभ को धोते समय प्रगल्भ नाम अग्नि का ध्यान करना चाहिए। यही जाति कर्म संस्कार प्रयोग है।

अथान्नप्राशनप्रयोगः ॥ अन्नप्राशनकर्म्मणा संस्करिष्यामीति सङ्कल्पः। ततो दक्षिणाङ्गुष्ठानामिकाभ्यां सुवर्णेनाज्यमादाय कुमारस्य जिह्वायां मेधां ते मित्रावरुणावित्येतया सदसस्पतिमित्येतया च पृथक् पृथक्

जुहोति ॥ शिशुजिह्वायां शुचिनामाऽग्निः । आद्यायाः प्रजापतिर्ऋषिरनुष्टुप्छन्दो मित्रावरुणादयो देवता, द्वितीयस्या मेधातिथिर्ऋषिर्गायत्रीछन्दस्सदस्पतिर्देवता, सर्पिः प्राशने विनियोगः । मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते। मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ स्वाहा ॥ १ ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं । सनिम्मेधामयासिषं स्वाहा ॥ २ ॥ ततो नालच्छेदनं स्तन्यदानं च कुर्विति ब्रूयात् ।

अर्थ—अब अन्नप्राशन का प्रयोग लिखते हैं। आचमन प्रणायाम कर देश काल तिथि वार आदि स्मरण के पश्चात् "अन्नप्राशन कर्म्मणा संस्करिष्यामि" वाक्य का योजना कर संकल्प करे। दक्षिण हाथ के अङ्गूठे और अनामि का अङ्गुलियों से सोने के टुकडे पर घी लेकर "मेधां ते मित्रा वरुणौ०" और "सदस्पति०" इन दोनों मंत्रों को पढ़ता हुआ दो वार बालक को चटा देवे। इन दोनों मन्त्रों में स्वाहा शब्द का प्रयोग इस कारण किया गया है कि बालक के मुख में शुचि नाम की अग्नि का वास है। अतः इस चटाने के कार्य में 'जुहोति" शब्द का भी प्रयोग किया है। घृत चटाने के पश्चात् नाल काटने और माता के दूध पिलाने के लिए पिता आज्ञा देवे।

अत ऊर्द्ध्वं पिता सचैलं स्नायात्। "भट्टभाष्ये पितुरपि पुत्रे जाते स्नानमिति" यत्तदस्मात्कर्मणि ऊर्द्ध्वमेव द्रष्टव्यम्। अत ऊर्द्ध्वं सूतिस्पर्शं वर्ज्जयेदादशरात्रात्। यत्तु जातकर्मणि नान्दीश्राद्धाभिधानं तन्न सम्यक्।

"नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु"। इति 'कर्मप्रदीपे' निषेधदर्शनात् । युक्तश्चैतत् । अनिविलम्बेन नालच्छेदे शिशोश्शरीरबाधापत्तेः

अर्थ - नारायणभट्टभाष्यकार ने लिखा है कि नाल छेदन की आज्ञा देने के पश्चात् सचैल स्नान करे और अब से बालककी माता को दश दिन तक कोई स्पर्श न करे । कर्म प्रदीप में लिखा है कि अष्टका श्राद्ध में तद्वत् आभ्युदयिक श्राद्ध नहीं होता क्योंकि श्राद्ध के लिए श्राद्ध का करना अनावश्यक है । सोष्यन्ती हवन कार्य, जात कर्म तथा प्रवास से आए हुए यजमान को भी कर्माङ्ग श्राद्ध करने की आवश्यकता नही है । उपरोक्त कर्मों में नान्दी श्राद्ध का विधान कर्म प्रदीप में निषेध होने के कारण विधि नही हो सकती। अति विलम्ब से नवजात शिशु के लिए शारीरिक बाधा की सम्भावना होगी अत उपरोक्त संस्कार कार्य्यों में श्राद्ध नही करनाही युक्ति युक्त है।

अत्रकुमारजिह्वायां "व्रीहियवमार्ज्जनमेकं कर्म्म, घृतप्राशनं द्वितीयंकर्म, तदुभयं जातकर्मेति" केचिन्मन्यन्ते । "परे तु, व्रीहियवमार्ज्जनं जातकर्म, घृतप्राशनमन्नप्राशनाख्यं कर्म्मान्तरमित्याहुः" । कः? पुनरत्र ज्यायान्, द्वितीयः । इति कुतः? सर्पिः प्राशयेदित्युक्तेः । सर्पिश्चान्नं भविष्यतीत्यन्नप्राशने तैत्तिरीयमांसस्याप्यन्यत्रान्नत्वदर्शनात् । नचेदं जातकर्म्मान्तर्गतं तथैव मेधाजननं सर्पिरित्युक्तेऽपिव्रीहियवमार्ज्जनवत् पूर्वसूत्रस्थनिमार्ष्टिक्रिययैव

घृतश्चो तनसिद्धेः। एतेन 'व्रीहियवमार्ज्जनं, सर्पिः प्राशनं च, जातकर्मेति' मत्वा, गौतमोक्तचत्वारिंशत्संस्कार-संख्यापूरणायान्नसंस्काराय च गोभिलानुक्तमन्नप्राशन-मध्वर्युशाखोक्तं ग्राह्यमिति वदन्तिः परास्ताः। परशाखो-क्तविस्तृतान्नप्राशनानुष्ठानस्य वैफल्यस्मरणाच्च। तथाहि "कर्मप्रदीपे"। 'अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्म-कारिणाम्। अक्रिया च परोक्ता च तृतीया चायथा क्रिया ।१। स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यः। कर्त्तु-मिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्' ।२। तत्राक्रिया स्वसूत्राननुष्ठानरूपा आद्या, परशाखोक्तकर्मानुष्ठानरूपा द्वितीया, यथावदननुष्ठानरूपा तृतीया। "यत्तु स्वसूत्रोक्त-मल्पेतिकर्त्तव्यता युक्तं तत्र सविस्तरं परशाखोक्तमनुष्ठे-यमिति" तत्तुच्छम्। 'गृह्यपरिशिष्टे' निषेधस्मृतेः। तथा-हि "प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः। प्रयोग-शास्त्रताहानेरनारम्भविधानतः ।१। कल्पे वा स्वगृह्यो-क्तं यस्य यावत् प्रकीर्त्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" ।२। अत्र [illegible] मन्यत्रान्यथा स्मर्य्यते। 'तेन सन्ततु[illegible] न कुर्य्यात् [illegible]' गृह्यासङ्ग्रहकारो[illegible]। 'यः स्वशाखो[illegible]मुत्सृज्य परशाखो[illegible]। अप्रमाणमृषिं कृत्वा [illegible]न्धे तमसि मज्जति' ।[illegible]। अत्र केचिद्व्रीहि[illegible] सर्पिः प्राशनं [illegible] कर्म, अन्नप्राशनं

णात्सूत्रान्तरे दर्शनात् । जातं यत्कर्म्मतज्जातकर्म्मास्यैव नामान्तरम् । वचनादेकेन कर्मणा संस्कारद्वयनिष्पत्तिरपि नानुचिता । गौतमोक्तचत्वारिंशत्संख्यापूर्त्तिश्चन्द्रदर्शनेनान्येन वा भविष्यति तस्मादुक्तयुक्तशास्त्रोक्तमन्नप्राशनं न कुर्यादित्याहुः" । अस्मिन्पक्षे जातकर्मण्यन्नप्राशने च पृथक् पृथगग्निनामकरणप्रतिपादकगृह्यासंग्रहवचनविरोधस्स्पष्ट एव । षष्ठे मास्यन्नप्राशनस्य विधिरन्येषाम् । ननु, 'सर्पिःप्राशनानन्तरं श्रूयमाणं नालच्छेदनादिकं प्राशनस्य जातकर्म्माङ्गत्वं बोधयति । सूत्रान्तरे नालच्छेदनादेर्जातकर्म्मान्ते विधानादिति' चेन्न । गोभिलमतेऽन्नप्राशनात्परमेव नालच्छेदनविधानाङ्गीकाराद्गोभिलीयानां जननकाल एव जातकर्म्मान्नप्राशनञ्च कर्त्तव्यमित्याहुः । इत्यन्नप्राशनप्रयोगः ।

अर्थ—१-धान और यव पीस कर उसी जल से नवजात शिशु के जीभ का धोना और सुवर्ण से घृत का चटाना ये दोनो क्रिया जातकर्म की ही हैं ।

२—नवजातशिशु के जीभ को व्रीहि और यव मिश्रित जल से धोना जातकर्म और सुवर्ण से धृत का चटाना अन्नप्राशन कर्म है ।

उपरोक्त मतो में विचारणीय यह है कि दोनो कर्मो को जात करण संस्कार मानना उत्तम है, अथवा अलग अलग जीभ प्रक्षालन को जात कर्म और घृत चटाने को अन्नप्राशन मानना युक्त है ?

२-अन्नप्राशन के प्रकरण में तित्तिर पक्षी के मांस को भी अन्नवत् प्राशन कराना देखा जाता है । यहाँ "सर्पिः प्राशयत्' लिखा

है। घृत प्राशन से अन्नप्राशन का ही भाव है। अतः घृत का चटाना अन्नप्राशन संस्कार है। यही युक्ति युक्त सिद्धान्त है। घृत का चटाना जात कर्म के अन्तर्गत नही है। यदि यह जात कर्म के अन्तर गत होता तो व्रीहि और यव मिश्रित जल से जीभ प्रक्षालन के समान घृत का भी जीभ पर से गिरा देने की विधि होती, परन्तु व्रीहि और यव मिश्रित जल से जीभ का प्रक्षालन और घृत का प्राशन कराना पाया जाता है।

१–व्रीहि यव मिश्रित जल से जीभ का प्रक्षालन और घृत का चटाना दोनो जातकर्म संस्कार ही मानना चाहिए। गौतम स्मृति में लिखे हुए–गर्भाधान १, पुंसवन २, सीमन्तोन्नयन ३, जातकर्म ४, नाम करण ५, अन्नप्रासन ६, चूड़ाकरण ७, उपनयन ८, ऋग्वेद व्रत ९, यजुर वेद व्रत १०, सामवेद व्रत ११, अथर्ववेद व्रत १२, समवर्त्तन १३, विवाह १४, होम, अतिथि सत्कार, वैश्वदेवबलि, वेदविद्या का पढ़ना पढ़ाना, अष्टका और पार्वण श्राद्ध, ये पंचमहायज्ञ ५, श्रावणी, अग्रहायणी, आश्वयुजि, अग्नि का आधान, चैत्री, ये ७ पाकयज्ञ। अग्निहोत्र, दर्शपौर्णमास, आग्रहायणादि ये ७ हविर्यज्ञ। चातुर्मास्य, पशुवन्ध, सौत्रामणि, अग्निष्टोम, अत्यग्निष्टोम, वाजपेय, अतिरात्र, सप्तोर्याम, ये ७ सोमयज्ञ* इन ४०

---

*—गर्भाधानपुंसवनसीमन्तोन्नयनं जातकर्मनामकरणान्नप्राशनं चौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणी संयोगः पंचानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां च अष्टका पार्वण श्राद्ध श्रवण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकयज्ञ संस्था अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ आग्रहायणं चातुर्मास्यानि निरूढ़पशुबन्धसौत्रामणीति सप्तहविर्यज्ञ संस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ षोडशी वाजपेयोति रात्रोऽप्तोर्याम इति सप्तसोमसंस्था. इत्येते चत्वारिंशत्संस्काराः।

गौतम स्मृति अध्याय-८

संस्कार के पूर्ण करने के लिए यजुर्वेदीय शाखीय अन्नप्राशन विधि के अनुसार ही वे संस्कार को पूरा करना चाहिए।

२—अपने शाखा में स्वल्प रूप से लिखी हुई ही किया कर्त्तव्य है, परन्तु पर शाखा में विस्तार के साथ लिखी हुई विधि के अनुसार करने का कुछ फल नहीं है। कर्म प्रदीप में लिखा है कि विद्वानों को अक्रिया अर्थात् अकर्त्तव्य तीन प्रकार के होते हैं। कर्त्तव्य कार्य को न करना, दूसरे के कर्म का अनुष्ठान, और तीसरा वेनिक्रम के साथ अर्थात् आगे पिछे कर्म करना। जो विचार हीन मनुष्य स्व शाखोक्त कर्मों को परित्याग कर पर शाखोक्त कर्मों के करने की इच्छा करता है उन दुर्बुद्धि के किए हुए अनुष्ठान निष्फल है। स्व शाखोक्त कर्म स्वल्प हो तो भी श्रेष्ठफल दायक होता है परन्तु विस्तार पूर्वक पर शाखीय कर्म निष्फल होता है। गृह्यपरिशिष्ट में पर शाखीय कर्म के निषेधक स्मृति वचनों का संकलन किया गया है "स्थालीपाक आदि कर्म के समूह गृह्यसूत्रों की विधि को संग्रह कर-कर्मविधि का विस्तार न करे। जिसके गृह्यसूत्र में थोरा या बहुत जितना कर्म लिखा हो उसी के करने से सब कुछ करने का फल हो जाता है"। किसी किसी स्थानों पर उपरोक्त वचनों के अन्तिम पद का पाठान्तर यों मिलता है कि "उसी स्वगृह्योक्त कर्म विधि से ही स्थाली पाक आदि कृत्यों को सम्पन्न करे। पर शाखीय कर्म का अनुष्ठान न करे। इस विषय को गृह्यसंग्रहकार भी स्पष्ट कर दिया है कि "जो अपने शाखा में उक्त कर्म को छोड़कर पर शाखीय कर्मों का अनुष्ठान करता है वह स्व शाखा को अप्रमाणित करनेवाला अज्ञान रूपी अन्धकार में प्रवेश करता है।

१—व्रीहि और यव को जल में पीस कर उसी से नवजात शिशु के जीभ का प्रक्षालन और घृत का चटाना ये दोनो कर्म जात

करण संस्कार हैं। कारण कि व्रीहि और यव के प्रयोग को सूत्रान्तर में भी कही अन्नप्राशन संस्कार नही कहा गया है। हां कालान्तर में हो सकता है। जन्म काल में नहीं। जन्म के समय में जो किया जाता है वह जातकर्म है। जातकर्म का ही नामान्तर मेधा जनन घृत चटाना भी है।

२–एक ही जातकर्म के वचन से जातकर्म और अन्नप्राशन दो कर्मों का प्रतिपादन अनुचित नही है। इससे और चन्द्र दर्शन आदि संस्कार से गौतम लिखित ४० सस्कार पुरे हो जावेंगे। अतः यजुर्वेदीगृह्यसूत्रों मे उक्त अन्नप्राशन नही करना चाहिए। इस पक्ष में जातकर्म और अन्नप्राशन इन दोनो कर्मों में अलग अलग अग्नि का नाम प्रति पादक गृह्यासंग्रह वचन का विरोध स्पष्ट ही है। "जन्म से छठवें मास में अन्नप्राशन संस्कार करे" कौथुमी शाखा से भिन्न शाखा वालों के लिए है।

१–क्या घृत चटाने के पश्चात् जो नाल छेदन सुना जाता है उससे अन्नप्राशन जातकर्म के अंग होने का बोध होता है? क्योंकि आश्वलायनादि गृह्यसूत्रों में जातकर्म के पश्चात् नाल छेदन की विधि है। परन्तु ऐसा नही है। गोभिल के मतमें अन्नप्राशन के पश्चात् ही नाल छेदन की विधि का समर्थन किया गया है, अत. गोभिलगृह्य सूत्रवाले द्विज के लिए जनन काल ही में जात कर्म और अन्नप्राशन दोनो ही संस्कार करना चाहिए, यह कहना ठीक नही है। जन्मकाल में घृतप्राशन को अन्नप्राशन संस्कार मानना युक्ति युक्त नही है। शास्त्रीय मीमांसा के द्वारा असिद्ध हो जाता है। कर्मप्रदीप आदि के प्रमाण वचनों को उधृत कर स्व पक्ष सिद्ध करने के लिये अर्थाभास का प्रयोग किया गया है। इस विषय को स्पष्ट करने के लिए नारायणभाष्य उधृत [illegible] है।

"तथैव मेधाजननँसर्पिः प्राशयेज्जातरूपेण वादाय कुमारस्य मुखे जुहोति मेधां ते मित्रावरुणावित्येतयर्चा सदसस्पतिमद्भुतमितिच"

नारायणभाष्यम्—"तथैव" तेनैव दक्षिणस्यपाणेरित्यादिना प्रकारेणाभिसंगृह्यमेधां श्रुतनिगादिन्त्र जनयतीति मेधाजननम्। किं ननु सर्पिर्घृतं प्राशयेत् । मेधांत इत्यनेन मन्त्रेण सदस इति च भेदे नोपन्यासोभेदेनैव प्राशनार्थः । प्राशयेज्जुहोतीति च भेदेनैवोपदेशात् । अथवा जातरूपेण सुवर्णेनादाय कुमारस्य मुखे जुहोति सोऽयं विकल्पः । हस्तेन वा जात रूपेणवेति । अन्येस्तु च शब्द मध्याहृत्येत्याचक्षते । वीह्यादि यन्मेधाजननं तन्त्रान्तरे प्रोक्तं तत्प्राशयेत् सर्पिश्च । तदसत्कुतः सर्पिषोपि मेधाजननत्वात् । अत्र कश्चिदाह । अन्नप्राशनं तदेव छन्दोगानामन्यस्याविधानात् । तदसत्कुतः यदैतदन्नप्राशनं जातकर्म कृतर नहि एतच्चेतज्जातकर्मतदान्नप्राशनमन्येन भवितव्यं । कुतः स्मृत्यन्तरेष्वपि पुरुषसंस्कारेषु पृथगेवास्य विधानात् । गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनमिति । नियतकालत्वाच्चान्नप्राशनस्य । षष्ठेऽन्नप्राशनं मासीति नामकरणेनच व्यवहितत्वात् । यत् षष्ठे मासि विहितं नामकरणेन च व्यवहितम् । तत्प्राङ्नाभिवर्द्धनाद्भवतीत्यतन्नयुक्तनरमिव मन्यामहे । न चैकेन संस्कारेण क्रियमाणेन संस्कारद्वय निवृत्तिर्भवतीति । यच्चैतदुक्तमन्यस्या विधानादिति । अत्र का युक्तिः । यद्यत्स्व शाखायां न विहितं तस्याक्रियेत्यवं चेन्नसस्यास्यात् । कथं ? छन्दोग शाखायांमग्निहोत्रस्यैवाविधानमतस्तेषामग्निहोत्रस्यैवाभावः तदभावेऽग्निष्टोमादीनां क्रतूनामभाव एव भवेदेतदन्त्यतायुक्तं । अतोऽस्मादेवाग्निहोत्रदर्शनात् । सर्वं शाखाप्रत्ययमेकं कर्मेति च न्यायादध्वर्युभ्यो गृह्णीयात् । तथा च कर्मप्रदीपः । यन्नाम्नातं स्व शाखायां परोक्तमविरोधिच । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवदिति । प्रतिविधानहोमदेवतामात्रमेवाध्वर्यु-

भ्यो गृह्णीयादिति। कर्त्तव्यताकलापश्च स्व गृह्योक्त एव स्यात्। कथं कर्मेति उच्यते। ब्रह्मोप वेशनान्तं कृत्वा स्वगृह्योक्तेन विधिना चरुं श्रपयेत्। निर्वाप प्रयोगस्तुप्रागेवोक्तः। यथा जुष्टं निर्वपामीति। प्राणायत्वा, अपानाय त्वा। चक्षुषेत्वा। श्रोत्राय त्वा। ततः आज्य भागान्तं कृत्वा स्रुवेणाज्याहुति द्वयं जुहुयात्। तत्र मन्त्रः "देवीं वाच मजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मेन्द्रेषु मूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतै तु स्वाहा एका। ताव देतया युक्ताचा हुतिर्भवति। यथा देवीं वाच मित्यनया वाजो नो अद्येतिच। वाजो नो अद्य प्रसुवाति दानं वाजोनो देवांऽऋतुभिः कल्पयाति। वाजो हि मा सर्व वीरं जजानविश्वा आशा वाज पतिर्जयेयँ स्वाहेति द्वितीया अथ हविष उपस्तरणाभिधारण न्यायेन। प्राणेनान्नमशीय स्वाहा। इति प्रथमा अपानेन गन्धमशीयस्वाहेति द्वितीया। चक्षुषा रूपाण्य-शीय स्वाहेति तृतीया। श्रोत्रेण यशोयशोय स्वाहेति चतुर्थी। ततः स्विष्टकृतादि तन्त्रं समाप्य हविष्यमन्नं गृहीत्वा कुमारं प्राशयेत्तूष्णीम् हंतेति वा।

अर्थात—जिस प्रकार व्रीहि और यव मिश्रित जल को दाहिने हाथ के अंगूठे और अनामिका अंगुलियों से लेकर बालक को प्राशन कराने का विधान है। उसी रीत्यानुसार "मेधांते" मंत्र को पढ़ता हुआ घृत लेकर मेधा जनन कर्म भी करे। अथवा जात नाम सुवर्ण का है। उसी पर घृत लेकर बालक को चटा देवे। ये दोनों प्रकार की विकल्प विधि कर्त्ताकी श्रद्धापूर्ण इच्छा पर निर्भर हैं। इनमें से जिसे चाहे उसे काम में लावे। जो व्रीह्यादि से शास्त्रों में मेधा जनन लिखा है वह इस घृत प्राशन के भी लिए है। कारण कि घृत मेध को उत्पन्न करता है। यहां पर कुछ लोग इसी घृतप्राशन को ही सामवेदियों के लिए अन्नप्राशन संस्कार मानते हैं। कारण कि उनके गृह्यसूत्र में [illegible] अन्नप्राशन

का कही विधान ही नहीं है। परन्तु यह कल्पना मिथ्या है। जिस प्रकार जातकर्म को अन्नप्राशन कहते हैं, उसी रीत्यानुसार अन्नप्राशन को जातकर्म की कुकल्पना कर सकते हैं। स्मृति शास्त्रों में पुरुष संस्कार के प्रकरण में गर्भाधान आदि संस्कारों को अलग अलग गिनाया गया है। समय विचार से भी अन्नप्राशन संस्कार को छठे मास में नाम करण के पश्चात् करने को लिखा गया है। जब अन्नप्राशन संस्कार को छठवें मास में नाम करण संस्कार के पश्चात् लिखा गया है तो वह नामकरण के पहले जातकरण के साथ कैसे हो सकता है? जातकर्म के साथ नामकरण संस्कार के पहले अन्नप्राशन संस्कार को करना हम अत्यन्त अयुक्त मानते हैं। एक जातकरण संस्कार के करने से जातकरण और नामकरण दोनों संस्कार पुरे हो जावेंगे यह युक्ति युक्त विचार नहीं है। नाल छेदन से पहले ही जातकरण संस्कार के कृत्य से अन्नप्राशन संस्कार के कृत्य को सम्पन्न करना हम अत्यन्त अनुचित मानते हैं। एक जातकरण संस्कार से इस जातकरण और अन्नप्राशन दोनो की पूर्त्ति नहीं हो सकती है। जो लोग एक सस्कार से दोनों का पूरा हो जाना मानते हैं इस विषय में उनकी कौन सी युक्ति अर्थात् प्रमाण है? जो जो कृत्य अपनी शाखा में न लिखी हों उन्हें अपना कर्त्तव्य नहीं मानना उचित नहीं है। सामवेद की कौथुमी शाखा में अग्नि का आधान, अग्निहोत्र का प्रयोग नहीं पाया जाता। उक्त शाखीय द्विज अपने लिए अग्निहोत्र का अभाव क्यों नहीं मानते? यदि अग्निहोत्र का अभाव मानते हैं तो अग्निष्टोमादि सब यज्ञों का भी अभाव हो जायगा। अत जो अपनी शाखा में न कहा गया हो उसे नहीं करना यह विचार असंघत है। "सर्व शाखाप्रत्ययमेककर्म" इस न्याय से यजुर्वेदीय शाखा में विहित उन विधियों को ग्रहण करना युक्ति युक्त प्रतीत होता है। जो कर्म अपनी शाखा में न उपदेश किया गया हो।

प्रवणे वा यज्ञवृक्षनिर्मिते पीठे प्रागग्रानुदगग्रान्वा कुशानास्तीर्य तेषु पञ्चाशत्कुशनिर्मितान्द्वादशवटून्संस्थापयेत् । ततः कलशोदकं प्रणवव्याहृतिभिर्गायत्र्या चाभिमन्त्र्य तेनोदकेन पीठपूजाद्रव्याण्यात्मानञ्च प्रोक्षयेत् ।

अर्थ—अब उक्त कर्म का प्रयोग लिखा जाता है। प्रथम पवित्र धारण कर आचमन और प्राणायाम करे। देश, काल तिथि, वार आदि स्मरण के पश्चात 'अधीनानां०' वाक्य योजना के साथ संकल्प करे। जल के किनारे पूर्वाग्र अथवा उत्तराग्र यज्ञोपयोगी वृक्ष का बना हुआ पीढ़ा रक्खे। उसीपर पूर्वाग्र अथवा उत्तराग्र कुशा रक्खे। उन रक्खी हुई कुशाओं पर पचास कुशाओं से बनाए हुए बारह बटू को रक्खे। एक घड़ा में जल भर लेवे। उस जल को प्रणव, त्रिव्याहृति तथा गायत्री मन्त्र से अभिमन्त्रित करे। उसी जल से सब पूजा सामग्री और अपने को भी प्रोक्षण करे।

"अत्र केचिद्गौतमादिसामभिर्गौतमादीनामावाहनं कुर्वन्ति" तन्निर्मूलम् । गौतमादिसाम्नां गौतमाद्युषिदृष्टत्वेऽपि गौतमादिप्रतिपादकत्वाभावाद्देवतान्तरप्रकाशकत्वान्नवग्रहादिमन्त्रवद्विनियोजक स्मृत्यभावाच्च । तस्मात्प्रणवव्याहृतिभिः पूजनमभिधीयते । ओं भूर्भुवस्स्वः गौतममावाहयामि ॥१॥ एवं वक्ष्यमाणानामृषीणामावाहनं पृथक्पृथक् कुर्यात् । तद्यथा । ओं भूर्भुवस्स्वः भरद्वाजम् ॥२॥ ओं भूर्भुवस्स्वः विश्वामित्रम् ॥३॥ ओं भूर्भुवस्स्वः जमदग्निम् ॥४॥ ओं भूर्भुवस्स्वः

वशिष्ठम् ॥५॥ ओं भूर्भुवस्स्व कश्यपम् ॥६॥ ओं भूर्भुवस्स्वः अत्रिम् ॥७॥ ओं भूर्भुवस्स्वः गौतमादिसप्तऋषयस्सुप्रतिष्ठा वरदा भवन्तु। इति कुशचटुषु क्रमेणावाहनं कृत्वा समष्ट्योपचारान् कुर्य्यात्। ओं भूर्भुवस्स्व गौतमादिभ्य आसनं समर्प्पयामि। एवमुत्तरेषूपचारेषु। पाद्यमर्घ्यमाचमनीयं मधुपर्कं पञ्चामृतस्नानं शुद्धोदकस्नानं वस्त्रं यज्ञोपवीतं चन्दनमक्षतान्पुष्पाणि धूपं दीपं नैवेद्यमन्यानप्युपचारान् यथासम्भवं कुर्यात्।

अर्थ—कुछ लोगों का मत है कि जिन साममन्त्रों के गौतम आदि ऋषि हैं उन मन्त्रों को पढ़कर गौतमादि ऋषियों का आवाहन करे, परन्तु इसमें किसी शास्त्र का प्रमाण नहीं है। जिन मन्त्रों के गौतम आदि ऋषि लिखे जाते हैं, उनसे उन ऋषियों का प्रचारक होना सिद्ध होता है। वे लोग उन उन मन्त्रों के देवता नहीं हैं। नवग्रह आदि मन्त्रों के समान उनका स्मृतिकारभि देवतान्तर संबन्ध भी नहीं लिखे है। अतः उनका पूजन प्रणव और व्याहृतियोंही से करना उचित प्रतीत होता है। ओ३म् भूर्भुवस्वः,, विधि से गौतम आदि ऋषियों का पृथक् पृथक् आवाहन और पाद्य, अक्षत, पुष्प, धूप, दीप, नैवेद्य आदि से पूजन करे।

ततो नाभिदघ्नोदकेनोपविष्टा देवतीर्थेन तत्तीर्थाग्रकुशैर्ऋषीनुच्चैरभिषिञ्चन्तस्तर्पयेयुः। आदौ समुदायेन तर्पणं यथा। ओंकारो महाव्याहृतयो गायत्री ब्रह्मा देवा वेदा ऋषयश्छन्दांस्याचार्य्यास्तृप्यन्ताम्। इति त्रिः। ततः पृथक्।

अर्थ—ऋषियों के पूजन के पश्चात् नाभी तक जल में चला जावे । अङ्गुलियों के अग्र भाग के तरफ कुशाओं का भी अग्र भाग कर हाथ में रक्खे "ओंकार०" वाक्य से एक साथ सब को तीन अञ्जलि जल प्रदान करे । तत्पश्चात् निम्नलिख्यानुसार पृथक् पृथक्—

ओंकारस्तृप्यतु । भूर्भुवस्स्वः महाव्याहृतयस्तृप्यन्तु । तत्सवितुरितिमन्त्रात्मा गायत्री तृप्यतु । सोमं राजानमिति । सोमꣳराजानं वरुणमग्निमन्वारभामहे । आदित्यं विष्णुꣳसूर्य्यं ब्रह्माणञ्च बृहस्पतिम् । ब्रह्मा तृप्यतु । अग्न आयाहि दशत्युपास्मा इत्यध्यायेन ऋगन्तैरर्द्धर्चैर्वा सन्तर्प्पयेत् ।

अर्थ ओंकार, व्याहृति, गायत्री और "सोम०" से तर्पण करने के पश्चात् "अग्न०" इत्यादि दश मन्त्रों से तर्पण करे । यथा—

अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ १ ॥ त्वमग्ने यज्ञानाꣳहोता विश्वेषाꣳहितः । देवेभिर्म्मानुषे जने ॥ २ ॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ ३ ॥ अग्निर्वृत्राणि जंघनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥ ४ ॥ प्रेष्ठं वो

अतिथिँस्तुषे मित्रमिव प्रियम् । अग्ने रथं न वेद्यम् ।
॥ ५ ॥ त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः ।
उत द्विषो मर्त्त्यस्य ॥ ६ ॥ एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा
गिरः । एभिर्वर्द्धास इन्दुभिः ॥ ७ ॥ आ ते वत्सो मनो
यमत्परमाच्चित्सधस्थात । अग्ने त्वां कामये गिरा ॥ ८ ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्द्ध्नो विश्वस्य
वाघतः ॥ ९ ॥ अग्ने विवस्वदाभरास्मभ्यमूतये महे ।
देवो ह्यसि नो दृशे ॥ १० ॥ वेदास्तृप्यन्तु । एवमुपास्मै
गायतेत्युत्तराध्यायेन देवास्तृप्यन्तु । उपास्मै गायता नरः
पवमानायेन्दवे । अभि देवाँ इयक्षते । अभि ते मधुना
पयोथर्वाणो अशिश्रयुः । देवं देवाय देवयु । स नः पवस्व
शं गवे शं जनाय शमर्वते । शँराजन्नोषधीभ्यः ॥ १ ॥
दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा गवा
शिरः । हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् ।
सीदन्तो वनुषो यथा । ऋधक्सोम स्वस्तये संजग्मानो
दिवा कवे । पवस्व सूर्यो दृशे ॥ २ ॥ पवमानस्य ने कवे

वाजिन्त्सर्गो असृक्षत । अर्वन्तो न श्रवस्यवः । अच्छा-
कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशंत धीतयः ।
अच्छासमुद्रमिन्दवोस्तंगावो न धेनवः । अग्मन्नृतस्य यो-
निमा ॥ ३ ॥ अग्न आयाहि वीतये गृणानो हव्यदातये ।
निहोता सत्सि बर्हिषि । तं त्वा समिद्भिरङ्गिरो घृतेन
वर्द्धयामसि । बृहच्छोचा यविष्ठ्य । स नः पृथुश्रवाय्य-
मच्छादेव विवाससि । बृहदग्ने सुवीर्य्यं ॥ ४ ॥ आ नो
मित्रावरुणा घृतैर्गव्यूतिमुक्षतं । मध्वा रजाँसि सुक्रतू ।
उरुशँसा नमोवृधा मन्हा दक्षस्य राजथः । द्राघिष्ठाभिः
शुचिव्रता । गृणाना जमदग्निना योनावृतस्य सीदतं ।
पातँ सोममृतावृधा ॥ ५ ॥ आयाहि सुषुमा हित इन्द्र
सोमं पिबा इमं । एदं बर्हिः सदो मम । आ त्वा ब्रह्म-
युजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ।
ब्रह्माणस्त्वा युजा वयँ सोमपामिंद्र सोमिनः । सुता-
वन्तो हवामहे ॥ ६ ॥ इन्द्राग्नी आगतँ सुतं गीर्भिर्नभो
वरेण्यम् । अस्य पातं धियेषिता । इन्द्राग्नी जरितुः सचा

यज्ञो जिगाति चेतनः । अथापातमिमꣳसुतं । इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम् ॥७॥ उच्चा ते जातमन्धसो दिविसद्भूम्याददे । उग्रꣳशर्म महिश्रवः । स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यतः । वरिवोवित्परिस्रव । एना विश्वान्यर्य आ द्युम्नानि मानुषाणां । सिषासंतो वनामहे ॥८॥ पुनानः सोमधारयापो वसानो अर्षति । आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः । दुहान उधर्दिव्यं मधु प्रियं प्रत्नꣳसधस्थमासदत् । आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥९॥ प्र तुद्रव परिकोशं निषीद नृभिः पुनानो अभिवाजमर्ष । अश्वं न त्वा वाजिनं मर्जयन्तोच्छावर्हि रशनाभिर्नयन्ति । स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः । पिता देवानां जनिता सुदक्षो विष्टंभो दिवो धरुणः पृथिव्याः । ऋषिर्विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन । सचिद्विवेद निहितं यदासा-

अपीच्य ३ृ गुह्यं नाम गोनाम् ॥ १० ॥ अभि त्वा शूर-
नोनुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमी-
शानमिन्द्र तस्थुषः ॥ ११ ॥ न त्वावा२ँ अन्यो दिव्यो न
पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र
वाजिनो गव्यंतस्त्वा हवामहे ॥ ११ ॥ कया नश्चित्र
आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ।
कस्त्वा सत्यो मदानां म२ँहिष्ठो मत्सदंधसः । दृढाचिदा-
रुजे वसु । अभीषुणः सखीनामविता जरितृणाम् । शतं
भवास्यूतये ॥१२॥ तं वोदस्ममृतीषहं वसोर्मन्दानमंधसः ।
अभिवत्सन्न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे । द्युक्ष२ँ
सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसं । क्षुमंतं
वाज२ँ शतिन२ँ सहस्रिणं मक्षू गोमंतमीमहे ॥ १३ ॥
तरोभिर्वो विदद्वसुमिन्द्र२ँ सबाध ऊतये । बृहद्गायन्तः
सुतसोमे अध्वरे हुवे भरं न कारिणं । न यं दुध्रा वरं ते
न स्थिरामुरो मदेषु शिप्रमन्धस । य आदृत्या शशमा-

नाय सुन्वते दाता जरित्र उक्थं ॥ १४ ॥ स्वादिष्ठया
मदिष्ठया पवस्व सोमधारया। इन्द्राय पातवे सुतः।
रक्षोहा विश्वचर्षणिर भियोनिमयोहते। द्रोणे सधस्थ-
मासदत्। वरिवो धातमो भुवो मंहिष्ठो वृत्रहंतमः।
पर्षिराधो मघोनाम् ॥ १५ ॥ पवस्व मधुमत्तम इन्द्राय
सोमक्रतुवित्तमो मदः। महि द्युक्षतमो मदः। यस्य ते
पीत्वा वृषभो वृषायतेस्य पीत्वा स्वर्विद। स सुप्रकेतो
अभ्यक्रमीदिशोछावाजं नैतशः ॥ १६ ॥ इन्द्रमच्छसुता
इमे वृषणं जन्तु हरयः। श्रुष्टे जातास इन्दवः स्वर्विदः।
अयं भराय सानसिरिन्द्राय पवते सुतः। सोमो जैत्रस्य
चेतति यथा विदे। अस्येदिन्द्रो मदेष्वाग्नाभं गृभ्णानि
सानसिं। वज्रश्च वृषणं भरतसमप्सुजित् ॥ १७ ॥
पुरोजिती वो अंधसः सुताय मादयित्नवे। अपस्वानं
श्नथिष्ठ न सखायो दीर्घजीह्वयं यो धारया पावकया
परिप्रस्पन्दते सुतः। इन्दुरश्वो न कृत्व्यः।

मभीनरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥ १८ ॥ अभि प्रियाणि पवते चनो हितो नामानि यह्वो अधि येषु वर्द्धते । आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वंचमरुहद्विचक्षणः । ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्द्धियो अस्या अदाभ्यः । दधाति पुत्रः पित्रोरपीच्या ३३ नाम तृतीयमधिरोचनं दिवः । अव द्युतानः कलशाꣳ अचिक्रद नृभिर्येमाणः कोश आ हिरण्यये । अभी ऋतस्य दोहना अनूषताधित्रिपृष्ठ उषसो विराजसि ॥ १९ ॥ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । प्रप्रवयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषं । ऊर्ज्जो नपातꣳ स हिना यमस्मयु-र्दाशेम हव्यदातये । भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ २० ॥ एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्द्धास इन्दुभिः । यत्र क्व च ते मनो दक्षं दधस उत्तरं । तत्रा योनिं कृणवसे । न हि ते पूर्त्तम-

त्विपङ्कुवन्नेमानां पते । अथादुवोवनवसे ॥ २१ ॥ वय-
मुत्वामपूर्व्यस्थूरं न कच्चिद्भरंतो वस्यवः । वज्रिञ्चित्रꣳ
हवामहे ॥ उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्रामयो-
धृषत् । त्वामिध्यवितारं ववृमहे सखाय इन्द्र सानसिं
॥२२॥ अधा हींद्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेवग्मंत उदभिः । वार्ण त्वा यव्याभिर्वर्द्धन्ति शूर-
ब्रह्माणि ॥ वावृध्वाꣳसं चिद्रद्रिवो दिवेदिवे युंजंति हरि
इषोरस्य गाथयोरौरथ उरुयुगे वचोयुजा । इन्द्रवाहा
स्वर्विदा ॥ २३ ॥ इत्यर्द्ध प्रपाठकः । देवास्तृप्यन्तु ॥

अर्थ—इन आधे प्रपाठक के २३ मन्त्रों से देवताओं का तर्पण करे ।

ततो भूरादिसमस्तव्याहृतिभिः सन्तर्प्यन्ते ऋषयः । ओं भूस्तृप्यतु । ओं भुवस्तृप्यतु । ओं स्वस्तृ । ओं महस्तृ । ओं जनस्तृ० । ओं तपस्तृ० । ओं सत्यं तृ० । ओं ऋषयस्तृप्यन्त । तत अग्न आयाहीत्यादितत्तच्छन्दस्काभिर्ऋग्भिश्छन्दांसि तर्पयेयुः अग्न आयाहि-ऋगन्ते गायत्री ।

दिव्यं वृणीमह इन्द्रवायू वृणीमहे । यद्धत्क्राणा विवस्वते नाभा संदाय नव्यसे । अधप्रनूनमुपयंति धीतयो देवाँ अच्छा न धीतयः । अत्यष्टिस्तृप्यतु । ओं घर्मः प्रवृक्तस्तन्वा समानृधे वृधे । ओं धृतिस्तृप्यतु । सर्पत प्रसर्पत सुवर्गमेम ते वयम् ॥ ओं अतिधृतिस्तृप्यतु । संयमन्नन्याय मन्वियमन्नसमायमन् । ओं कृतिस्तृप्यतु । चराचराय वृहत इदं वाममिदं वृहत् । ओं प्रकृतिस्तृप्यतु । द्यौरक्रान्भूमिरततन्त्समुद्रँ समचुकुपत् । ओं आकृतिस्तृप्यतु । ज्योतिष्पत स्वः प्पतान्तरिक्षं पृथिवीं पंच प्रदिशः । ओं विकृतिस्तृप्यतु । मनोजयिद्धृदयमजयिदिन्द्रोजयिदहमजैषम् । ओं संस्कृतिस्तृप्यतु । प्रागदन्यनुवर्त्तते रजोपागन्यत्तमो पेवतिभ्यसा । ओं अभिकृतिस्तृप्यतु । ओं अधिप । तायि । मित्रप । तायि । क्षत्रप । तायि । स्वः प्पतायि । धनपतारयि । नारमाः । ओं उत्कृतिस्तृ० । इति विच्छन्दांसि । ततो वंशीयानामृषीणां प्रतिनामभिः प्रथमं तर्पणं । तद्यथा । ओं नमो ब्रह्मणे नमो

ब्राह्मणेभ्यो, नम आचार्य्येभ्यो, नम ऋषिभ्यो, नमो देवेभ्यो नमो वेदेभ्यो, नमो वायवे, च मृत्यवे, च विष्णवे, च नमो वैश्रवणाय, चोपजयाय च। इत्यन्तं कृताञ्जलिः पठित्वा तर्प्पयेत् ।

अर्थ—"नमो ब्रह्मणे" इत्यादि वाक्यों को पढ़ता हुआ कृताञ्जलि कर पुनः तर्पण—

शर्वदत्तस्तृप्यतु ॥ १ ॥ रुद्रभूतिस्तृ० ॥ २ ॥ त्रातस्तृ० ॥ ३ ॥ निगरस्तृ० ॥ ४ ॥ गिरिशर्म्मा तृ० ॥ ५ ॥ ब्रह्मवृद्धिस्तृ० ॥ ६ ॥ मित्रवर्चास्तृ० ॥ ७ ॥ सुप्रतीतस्तृ० ॥ ८ ॥ बृहस्पतिगुप्तस्तृ० ॥ ९ ॥ भवत्रातस्तृ० ॥ १० ॥ कुस्तुकस्तृ० ॥ ११ ॥ श्रवणदत्तस्तृ० ॥ १२ ॥ सुशारदस्तृ० ॥ १३ ॥ ऊर्ज्जयन्तस्तृ० ॥ १४ ॥ भानुमाँस्तृ० ॥ १५ ॥ आनन्दजस्तृ० ॥ १६ ॥ शाम्बस्तृ० ॥ १७ ॥ काम्बोजस्तृ० ॥ १८ ॥ मद्रगारस्तृ० ॥ १९ ॥ सातिस्तृ० ॥ २० ॥ सुश्रवस्तृ० ॥ २१ ॥ प्रातरनूहस्तृ० ॥ २२ ॥ केतुस्तृ० ॥ २३ ॥ मित्रविन्दस्तृ० ॥ २४ ॥ सुनीथस्तृ ॥ २५ ॥ सुतेमनास्तृ० ॥ २६ ॥ अंशुस्तृ० ॥ २७ ॥ अमावस्यस्तृ० ॥ २८ ॥ राधस्तृ० ॥ २९ ॥ गातास्तृ० ॥ ३० ॥ संवर्गजित्तृ० ॥ ३१ ॥ शाकदासस्तृ० ॥ ३२ ॥ विचक्षणस्तृ ॥ ३३ ॥ गर्द्दभीमुखस्तृ० ॥ ३४ ॥ उदरशाण्डिल्यस्तृ० ॥ ३५ ॥ अतिधन्वातृ०

॥ ३६ ॥ मशकस्तृ० ॥ ३७ ॥ स्थिरकस्तृ० ॥ ३८ ॥ वसिष्ठस्तृ० ॥ ३९ ॥ वासिष्ठस्तृ० ॥ ४० ॥ सुमन्त्रस्तृ० ॥ ४१ ॥ शूषस्तृ० ॥ ४२ ॥ शालस्तृ० ॥ ४३ ॥ हतिस्तृ० ॥ ४४ ॥ इन्द्रोतस्तृ० ॥ ४५ ॥ वृषशुष्णस्तृ० ॥ ४६ ॥ निकोथकस्तृ० ॥ ४७ ॥ प्रतिथिस्तृ० ॥ ४८ ॥ देवतरास्तृ० ॥ ४९ ॥ शवास्तृ० ॥ ५० ॥ अग्निभूस्तृ० ॥ ५१ ॥ इन्द्रभूस्तृ० ॥ ५२ ॥ मित्रभूस्तृ० ॥ ५३ विभण्डकस्तृ० ॥ ५४ ॥ ऋष्यशृङ्गस्तृ० ॥ ५५ ॥ कश्यपस्तृ० ॥ ५६ ॥ अग्निस्तृ० ॥ ५७ ॥ इन्द्रस्तृ० ॥ ५८ ॥ वायुस्तृ० ॥ ५९ ॥ मृत्युस्तृ० ॥ ६० ॥ प्रजापतिस्तृ० ॥ ६१ ॥ ब्रह्मा तृ० ॥ ६२ ॥

ततोऽग्न्यादीनां तर्पणम्। अग्निस्तृप्यतु। प्रजापतिस्तृप्यतु। विश्वेदेवास्तृप्यन्तु। ओंकारस्तृप्यतु। वषट्कारस्तृप्यतु। महाव्याहृतयस्तृप्यन्तु। गायत्रीतृप्यतु। ब्रह्मातृप्यतु। विष्णुस्तृप्यतु। वेदास्तृप्यन्तु। देवास्तृप्यन्तु। ऋषयस्तृप्यन्तु। मुनयस्तृप्यन्तु। आचार्यास्तृप्यन्तु। पुराणानि तृप्यन्तु। छन्दाꣳसितृप्यन्तु। यज्ञास्तृप्यन्तु। अध्ययनं तृप्यतु। द्यावापृथिव्यौतृप्येताम्। अन्तरिक्षं तृप्यतु। अहोरात्राणि तृप्यन्तु। मासास्तृप्यन्तु। ऋतवस्तृप्यन्तु। संवत्सरस्तृप्यतु। वरुणस्तृप्यतु। समुद्रास्तृप्यन्तु। नद्यस्तृप्यन्तु। गिरयस्तृप्यन्तु। क्षेत्राणितृप्यन्तु। वनानि तृप्यन्तु। ओषधयस्तृप्यन्तु। वनस्पतयस्तृप्यन्तु

पशवस्तृप्यन्तु। नागास्तृप्यन्तु। उरगास्तृप्यन्तु। सुपर्णा-स्तृप्यन्तु। वयांसि तृप्यन्तु। गावस्तृप्यन्तु। वसवस्तृ-प्यन्तु। रुद्रास्तृप्यन्तु। आदित्यास्तृप्यन्तु। मरुतस्तृप्यन्तु। सिद्धास्तृप्यन्तु। साध्यास्तृप्यन्तु। गन्धर्वास्तृप्यन्तु। पिशाचास्तृप्यन्तु। यक्षास्तृप्यन्तु। रक्षांसितृप्यन्तु भूतानि तृप्यन्तु। नक्षत्राणि तृप्यन्तु अश्विनौ तृप्येताम् अप्सरसस्तृप्यन्तु। चतुर्विधभूतग्रामस्तृप्यतु। मरीचि-स्तृप्यतु। अत्रिस्तृ०। अङ्गिरास्तृ०। पुलस्तिस्तृ०। पुल-हस्तृ०। क्रतुस्तृ०। प्रचेतास्तृ०। वसिष्ठस्तृ०। भृगुस्तृ० नारदस्तृ०। सप्तर्षयस्तृप्यन्तु। अरुन्धती तृ०। गोभि-लाचार्यस्तृ०। एवमादयः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिता॥

अथापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन त्रिस्तर्पयेत्।

अर्थ—यज्ञोपवीत को दाहिने कन्धे पर धारण कर लेवे जो वाम पार्श्व में लटकी रहे। हाथ में दुगुन कुशाएँ लेकर तिल के साथ दक्षिण मुख पितृ तीर्थ से तीन तीन अञ्जलि देता हुआ—

ओंकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दास्याचार्यास्तृप्यन्तु। एवं त्रिः। राणायनिस्तृप्यतु। शाट्यमुग्रस्तृ०। व्यास-स्तृ०। भागुरिस्तृ०। औगुण्डिस्तृ०। गौल्गुल्विस्तृ०। भानुमानौपमन्यवस्तृ०। कराटिस्तृ०। मशकोगार्ग्यस्तृ०।

वार्षगण्यस्तृ० । कौथुमिस्तृ० । शालिहोत्रिस्तृ० । जैमिनिस्तृ० त्रयोदशैते मे सामगाचार्याः स्वति कुर्वन्तु तर्पिताः० ॥ शठिस्तृ० । भाल्लविस्तृ० । काल्लविस्तृ० । ताण्ड्यस्तृ० । वृषाणकस्तृ० । रुरुकिस्त० । शमवाहुस्तृ० । अगस्त्यस्तृ० । वष्कशिरास्तृ० । हूहूस्तृ० । दशैते मे प्रवचनकर्त्तारः स्वस्ति कु० ॥ कव्यवालस्तृ० । नलस्तृ० । सोमस्तृ० । यमस्तृ० । अर्यमा तृ० । अग्निष्वात्तास्तृप्यन्तु । सोमपास्तृप्यन्तु । वर्हिषदस्तृप्यन्तु । यमस्तृ० । धर्मराजस्तृ० । मृत्युस्तृ० । अन्तकस्तृ० । वैवस्वतस्तृ० । कालास्तृप्यन्तु । सर्व भूतक्षयस्तृप्यन्तु औदुम्बरस्तृ० । दध्नस्तृ० नीलस्तृ० परमेष्ठी तृ० । वृकोदरस्तृ० । चित्रस्तृ० । चित्रगुप्तस्तृ० ।

तत उत्तरवंशीयानाम् अर्यमभूतिस्तृ० । भद्रशर्मा तृ० । पुष्पयशसस्तृ० । सङ्करस्तृ० । अर्यमगोभिलस्तृ० । पूषमित्रगोभिलस्तृ० । अश्वमित्रगोभिलस्तृ० । वरुणमित्रगोभिलस्तृ० । मूलमित्रगोभिलस्तृप्यतु । वत्समित्रगोभिलस्तृ० । गौल्गुल्वीपुत्रगोभिलस्तृ० । बृहद्वसुर्गोभिलस्तृ० । ततो राधादिद्वितीयखण्डोक्तांस्तर्प्पयेत् । राधस्तृप्यतु । गातास्तृ० । संवर्गजिनस्तृ० । शाकदासविचक्षणस्तृ० । गर्द्दभीमुखस्तृ० । उदरशाण्डिल्यस्तृ० । अतिधन्वास्तृ० । मशकस्तृ० स्थिरकस्तृ० । वसिष्ठस्तृ० । वासिष्ठतृ० । सुमन्त्रस्तृ० ।

शूषस्तृ०। रालस्तृ०। दृतिस्तृ०। इन्द्रोतास्तृ०। वृषशुष्णस्तृ०। निकोथकस्तृ०। प्रतिथिस्तृ०। देवतरास्तृ०। शवसायनस्तृ०। अग्निभूइन्द्रभूमित्रभुवस्तृप्यन्तु। विभण्डकस्तृ०। ऋष्यशृङ्गस्तृ०। कश्यपस्तृ०। अग्निस्तृ० इन्द्रस्तृ०। वायुस्तृ०। मृत्युस्तृ०। प्रजापतिस्तृ०। ब्रह्मा तृप्यतु।

ततः समाचारान्निवीतिना सनकादीन् सन्तर्प्याचम्य, ऋषीन्सम्पूज्य, ऋषिश्राद्धं कृत्वा, ऋषिमाल्यामादाय, प्लवसाम्ना तद्ब्राह्मणेन च संप्लाव्य, निमज्याचम्य, अरिष्टवर्गसामानि पठित्वा, ऋषीनादाय, गृहम्प्रागच्छेयुः॥ इति ऋषितर्पणप्रयोगः॥

अर्थ—उपरोक्त तर्पण के पश्चात् आचार के अनुसार निवीती हो कर सनकादि ऋषियों का अर्पण करे। आचमन कर ऋषियों का पूजन करे। ऋषि श्राद्ध करे। ऋषियों की पूजापर चढ़ाई हुई मालाओं को लेकर प्लव साम और प्लव ब्राह्मण को पढ़ता हुआ नदी आदि जलाशय में वहवा देवे। जल में गोता लगा कर अरिष्ट साम का पाठ करे। कुश निर्मित ऋषियों को लिए हुए गृह को आवे। यही ऋषि तर्पण और पूजन का प्रयोग है।

अथोपाकर्मप्रयोगः। तत्र येषां ब्रह्मचारिणां पूर्वमुक्तान्तश्रुतस्य वेदस्य प्रथमारम्भस्तेषामत्र वृद्धिश्राद्धम्। आनीतानृषीन् शुभपीठाद्यासने कुशोपरि संस्थाप्य गन्धादिभिरुपचारैः सम्पूज्याचम्य शालाग्नेः [illegible] ग्नौ समिधं हुत्वा ब्राह्मणमुपवेश्य [illegible]

**तत्र विशेषः । रत्ना, धाना, दधि चासाद्य सम्प्रोक्ष्य देशकालौ सङ्कीर्त्य छन्दोयातयामत्वनिवृत्तये नित्य-विधिरूपमुपाकर्माङ्गहोममहंकरिष्ये इति सङ्कल्प्याग्निं परिस्तीर्य्य, इध्ममभ्याधायाज्यं संस्कृत्य, पर्युक्ष्य, स्रुवं सम्मृज्य, व्याहृतित्रयं हुत्वा, पङ्क्त्याकारेणोपविष्टां-श्छिष्यान्पाठयेद्गायत्रीं संहितावत् । तत्सवितुर्व्वरेण्यम् । इति प्रथमम् । ततः । भर्गो देवस्य धीमहि । ततः धियो यो नः प्रचोदयात् । ततोऽर्द्धर्चेशः पुनः समस्ताम् । ततः । सावित्रं साम ।**

अर्थ—ये उपरोक्त देव, ऋषि आदि के तर्पण का प्रयोग समाप्त हुआ । यद्यपि ज्येष्ठ सामिकव्रत के पश्चात् "अथोपाकर्म" वाक्य लिख-कर आरम्भ किया गया है परन्तु ऋषि तर्पण कर्म तक गृह्य सूत्र का कोई स्पष्ट आदेश नही सूत्रित है। यह आचार से विशेष संबन्धि है ।

अब उपाकर्म का प्रयोग अङ्कित किया जाता है । जो गोभिलाचार्य ने सूत्रित किया है। जिन ब्रह्मचारियों को आचार्य ने वेद केवल श्रवण करा दिया हो किन्तु उसका अध्ययन (अभ्यास) नहीं किया गया हो उन्हें उपाकर्म कृत्य सम्पन्न कर अध्ययन करना चाहिए। इस उपाकर्म में प्रथम वृद्धि श्राद्ध करना चाहिए । जिसकी विधि श्राद्ध कल्प सूत्र में लिखी है। पीढ़े पर ऋषियों का स्थापन पूजनादि कृत्य के पश्चात् गृह पर आकर। आचमन प्राणायाम करे । गृह्याग्नि के पश्चिम बैठकर बिना मन्त्र एक समिध होम कर देवे । ब्रह्मवरण से आरम्भ कर व्याहृति होमान्त

कृत्य सम्पन्न करे। यहाँ पर आसादन में विशेषता यह होगी कि रक्षा सूत, भुँना हुआ जौ और दही भी रहेगा। देश काल, आदि स्मरण के पश्चात् "छन्दो यात०" वाक्य योजना के साथ संकल्प करे। अग्निका परिस्तरण, इध्म प्रक्षेप, आज्य संस्कार, पर्युक्षण और स्रुव प्रतपन कर व्याहृतियों से तीन घृताहुति प्रदान करे। एक पंक्ति में सब शिष्यों को बैठाकर प्रथम संहिता पाठ के अनुसार सावित्री मन्त्र का एक एक चरण पढ़ावे। चतुर्थ वार आधे ऋचा को पढ़ा कर पुनः पुरा पुरा गायत्री मन्त्र को पढ़ा देवे। "सोमꣳ राजानं०" मन्त्रों के पढ़ाने के प्रथम वेद के पर्व (प्रकरण) को पढ़ा देना चाहिए। तत् पश्चात् "सोमꣳ राजानम् उच्चा" साम का अध्ययन करावे यथा—

सोमꣳ राजानमिति वृहस्पतिर्ऋषिरनुष्टप्छन्दो विश्वेदेवा देवता पङ्क्त्याकारेण शिष्यान्

४र ५ ४र २ ५ ५ ५ २ १

पाठने विनियोगः। सोमꣳ राजानं वरुणाम्। अग्नि-

र २र १ २ २ २१ १ २ १र

मन्वारभामहे३ होवा३हाइ। आदित्यं विष्णुꣳसू-

२ १ २ २ २१र २ १ २ २

र्यम्। होवा३हाइ। ब्रह्माणाऽ२३ब्बा३। होवा३हाइ।

१ र २ ३ ५

वृहा३उवा३। पा२३४तोम्। ततो वेदस्यादिनिः पर्वनामानि

४ ५र ४ ५ ५ ४

पाठयेत्। ॐ ओग्नायि। ॐ तद्यौहोवा ॐ उच्चा। ततश्छन्दोहोमः।

अर्थ—उपरोक्त मन्त्र पाठ के पश्चात् स्रुवा से घृत ले लेकर निम्नाङ्कित मन्त्रों को पढ़ता हुआ आहुतियों को प्रदान करे यथा—

अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि स्वाहा । गायत्र्या इदं न ममेति त्यागः । एवं सर्वत्र । पुरुन्त्वा दाशिवा२ँवोचेररिग्ने तव स्विदा । तोदस्येव शरण आमहस्य स्वाहा । उष्णिह इदं० अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो । प्रनो राये पनीयसे रत्सि वाजाय पन्थाम् स्वाहा । अनुष्टुभ इदं० । यज्ञा-यज्ञा वो अग्नये गिरागिरा च दक्षसे । प्र प्रवयममृतं जातवेदसं प्रियं मित्रं न शᳪसिपं स्वाहा । बृहत्या इदं० । स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः । या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यं स्वाहा । पङ्क्त्या इदं० । आजुहोता हविषामर्जयध्वं निहोतारं गृहपतिं दधिध्वं । इडस्पदे नमसा रातहव्यᳪ सपर्यता यजतं पस्त्यानाम् स्वाहा । त्रिष्टुभ इदं० । चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे । अनूधा यदजीजनदधाचिदाववक्षत्सद्यो महि दूत्या३ᳪ

१ २     १ २ १ १ २ १ ३
चरन् स्वाहा। जगत्या इदं०। प्र वो महे मनयो यन्तु
१ २    ३ १ २    ३ १ २ ३ १ २    १ २ १
विष्णवे मरुत्वते गिरिजा एवया मरुत्। प्रशर्द्धाय
१ २र    ३ १ २   ३ १ २   ३ १ २   ३ १ २   ३ १ २
प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे
१ २    ३ १ २
स्वाहा। अतिजगत्या इदं०। प्रोष्वस्मै पुरो रथमिन्द्राय
३ १ २    ३ १ २    ३ २ ३ २ ३ १ २    १ २
शूषमर्चत। अभीके चिदुलोककृत्सङ्गे समत्सु वृत्रहा।
३ १ २    ३ १ २र    ३ १ २ ३ १ २
अस्माकं बोधि चोदिता नभतामन्यकेषां ज्याका अधि
१ २    २ ३ १ २र   १ २
धन्वसु स्वाहा। शक्वर्य्या इदं०। तवन्त्यं नर्यं नृतो
३ २ ३ २ ३ २ ३ १ २ ३ २    २ ३ १ २
इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतं। यो देवस्य
१२ ३   १ २ ३   १ २ ३ २   ३ २    २ ३   १ २ ३ १
शवसा प्राणिणा असुरिणं नपः। भुवो विश्वमभ्य-
२ ३ १ २   ३ १ २र   ३ २ ३ १ २र
देवमोजसा विदेदूर्ज२ शतक्रतुर्विदेदिषं स्वाहा। अति-
१ २    ३ १ २र    १ २
शक्वर्य्या इदं०। त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-
३ १ २र ३ १ ३ १ २ ३ १ २ ३ २   १ २ ३
स्तृंपत्सोममपिबद्विष्णुना सुतं यथावशं। स ईं ममाद
२ ३ २ ३ १ २   ३ २ ३ १   २र   २ ३ २ ३
महि कर्म कर्त्तवे महामुरु२ सैन२ संश्चद्देवो देवा२
३ १   २र ३ १   २र    २ ३
सत्य इन्दुः सत्यमिन्द्रं स्वाहा। अष्ट्या इदं०। अग्न
१ २   ३ २ ३ २ ३ १ २ ३ १   २ ३ २ २
औषट् पुरो अग्निं धिया दध आनुत्यच्छर्द्धो दिव्यं वृणी-

मह इन्द्रवायू वृणीमहे । यद्ध्यचक्राणा विवस्वते नाभा-
संदाय नव्यसे । अधमनूनमुपयन्ति धीतयो देवा अच्छा
न धीतयः स्वाहा । अत्यष्ट्या इदं० । धर्मः प्रवृत्तन्तन्वा
समानृधे वृधे स्वाहा । धृत्या इदं० । सर्पन्त प्रसर्पन्त सुवर्ग-
सेम ते वयं स्वाहा । अतिधृत्या इदं० । संयमन्नव्याय-
मवन्विमञ्च समान्यमन् स्वाहा । कृत्या इदं० । चरा-
चराय वृहत इदं वायमिदं वृहत्स्वाहा । प्रकृत्या इदं० ।
द्यौरक्षान्सूम्भिरततनत्समुद्रँ समचूकुपत्स्वाहा । आकृत्या
इदं० । ज्योतिष्पत स्वः प्पतान्तरिक्षं पृथिवीं पंच प्रदिशः
स्वाहा । विकृत्या इदं । मनो जयिद्धृदयमजयिदिन्द्रो
जयिदहमजैषम् स्वाहा । सङ्कृत्या इदं० । प्रागन्यदनु-
वर्त्तते रजो पागन्यतमो पेपति भ्यसा स्वाहा । अभि-
कृत्या इदं० । अधिप । तायि । मित्रप । तायिः । क्षत्रप
तायि । स्वःप्प तायि । धनपतारयि । नास्माः स्वाहा । उत्कृ-
त्या इदं० । ततो गानपर्वादिहोमः । यथा । ओं ओग्नायि

स्वाहा। आग्नेयायेदं०। तद्धौहोवा स्वाहा। इन्द्रायेदं०। ओं उच्चा स्वाहा। पवमानायेदं। ओं यद्यावई स्वाहा। अर्कायेदं०। ओं हाउ ३। आयु ३। सात्यं ३। इन्द्रन्नरो स्वाहा। छन्दायेदं०। ओं हुवेवाचाम्। स्वाहा। वाचोव्रत्तायेदं०। ओं ए २। विदामघवन्विदाः स्वाहा। शक्वार्य्या इदं०। ओं उच्चाता ३ इयिजातमन्धसाः। स्वाहा। दशरात्रायेदं०। ओं वृषापा ३ वस्वधारया स्वाहा। संवत्सरायेदं०। ओं प्रत्यस्मैपिपी स्वाहा। एकाहायेदं०। ओं पन्यं पन्यमित्सोतारः। पन्यं पन्यो वा स्वाहा। अहीनायेदं०। ओं विशः। विशो ३। वो अतिथाइम् स्वाहा। सत्रायेदं। ओं प्रत्नꣳसधस्थमाहो २। सदात्स्वाहा। प्रायश्चित्तायेदं०। ओं आभि त्वा शूरनोनुमाः स्वाहा। क्षुद्रायेदं०। ओं आभित्वा शूरनोनुमा स्वाहा। क्षुद्रायेदं०। ओं आभित्वा शूरनोनुमो वा स्वाहा। दशरात्रायेदं०। पूनानस्सोमधारयोवा स्वाहा।

संवत्सरायेदं० ओं उहुवा ओहा । ओं होवा । पुरोजिताग्नि स्वाहा । एकाहायेदं० । चयोहम् । प्रमुन्वनाना २ स्वाहा । अहीनायेदं० । ओं मा भेम माश्रमिष्मोवावा स्वाहा । सत्रायेदं० । ओं उहुवा ओहाओहो वा तम्वोदस्माम् स्वाहा । प्रायश्चित्तायेदं० । ओहोग्नियज्ञायज्ञावो अग्नया३ए स्वाहा । क्षुद्रायेदं० । अग्नआयाहीत्यृचं पठित्वा, अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि स्वाहा । छन्दस्या इदं० । ओं इन्द्र ज्येष्ठं न आभर ओजिष्ठं पुपुरिश्रवः । यद्दिधृक्षेम वज्रहस्त रोदसी ओभेसुशिप्रपपाः स्वाहा । आरण्या इदं० । विदा मघवन् विदा गातुमनुशँसिषो दिशः शिक्षा शचीनां पते पूर्वीणां पुरुवसो स्वाहा । महानाम्नीभ्य इदं० । ओं उपास्मै गायतानरः पवमानायेन्दवे । अभि देवाँइयक्षते स्वाहा उत्तराया इदं० ।

महन्मे वोचो भर्गो मे वोचो यशोमेवाचे स्तोमं मे वोचो भुक्तिं मे वोचः सर्वं मे वोचस्तन्मावतु तन्मा

विशतु तेन भुक्षिषीय स्वाहा । ताण्ड्यब्राह्मणायेदं० । ब्रह्म च वा इद मग्रे सुब्रह्म चास्तां स्वाहा । षड्विंशायेदं० । ब्रह्मा ह वा इदमग्र आसीत् स्वाहा । सामविधानायेदं० । अथ खल्वयमार्षप्रदेशो भवति स्वाहा । आर्षेयायेदं० । अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी स्वाहा । देवताध्यायायेदं० । अथातः संहितोप निषदो व्याख्यास्यामः स्वाहा । संहितोपनिषद इदं । ओं नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नह ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजयाय च स्वाहा । वंशब्राह्मणायेदं० । देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दीव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचं न स्वदतु । उपनिषद इदं० । अथातः स्वरशास्त्राणां सर्वेषां वेद निश्चयम् । उच्चनीचविशेषांश्च स्वरान्यत्वं प्रवर्तते स्वाहा । शिक्षाया इदं० । क्लृप्तो ज्योतिष्टमोऽतिरात्रोक्थ्यशो उशीकः स्वाहा । कल्पसूत्रायेदं० । कल्पसूत्रं यदा नाधीतं भवति तदा दशानां सूत्राणां मध्ये यदधीतं भवति तन्नाम्ना होमः कर्त्तव्यः ।

अर्थ—यदि कल्प सूत्र का अध्ययन न किया हो तो दशों सूत्रों में जिसका अध्ययन किया हो उसी से आहुति प्रदान करे ।

अथ वाचो वृत्तिं व्याख्यास्यामः स्वाहा । वैय्याकरणयेदं० । समाम्नायः समाम्नातः सव्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचत्तते स्वाहा । निरुक्तायेदं० । अथातश्छन्दसां विषयं व्याख्यास्यामः स्वहा । छन्दोभ्य इदं । पञ्चसंवत्सरमयं युगाध्यत्तं प्रजापतिम् । दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः । इदं ज्योतिषामयनविकल्पाः । इदं सूत्रमभ्यतं भवति तस्मात्प्रसिद्धं अनिषिद्धं ज्योतिष उक्ता कस्मादिदं ग्राह्यमेव तेषामयनं विकल्पाय स्वाहा । ज्योतिष उक्ता कस्मादिदं ग्राह्यमेव तेषामयनं विकल्पाय स्वाहा । ज्योतिष इदं० । ततो व्याहृतिचतुष्टयं हुत्वा पुनस्त्रयं हुत्वा समिदाधानपर्य्युत्तणयज्ञवास्तुवस्वाहुत्यन्तं कृत्वा दत्तिणे पाणौ रत्तावन्धनम् ।

अर्थ—"अग्नआयाहि०" मन्त्रों से ६१ घृताहुति प्रदान करे। व्याहृतियों से चार तत्पश्चात् तीन आहुति प्रदान कर दर्शपौर्णमासंवत् शेष कृत्य सम्पन्न करे।

हिरण्यभूषितां यवपोटलिकां विचित्रतन्तुबद्धां,
२र १ २ र र र र र १ २र र २ऽ३ १ १
ए रत्तत नो रत्तितारो गोपायत गोपायितारा २३-
१ १
४५ः ॥ इतिमन्त्रेण । येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामनुबध्नामि रत्ते माचल

१ २ १ २ १र २ १ र २
माचलेति ॥ तुवं यवायि । छ दाशूऽ२३षाः । नहॅंप्पाहि
२ १र २ १ २ ३ १ ५
श्रू । गुहोगा २३ यिराः । रत्नातो ३ का३म् ऊताऽ२३हा
१ ५ ५
३४ऽ३यि । त्माऽ२३४नो६हायि । इत्यनेन रत्नाबन्धनम् ।
ततः सर्वं धानावन्तमितिमन्त्रेण । अस्य मन्त्रस्य पुष्प-
ऋषिर्गायत्रीछन्द इन्द्रो देवता धानाभक्षणे विनियोगः ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
धानावन्तं करंभिणमपूपवंतमुक्थिनम् । इन्द्र प्रातर्जुषस्व
नः असंस्वादन्निर्गीर्य्य अनाचान्ता एव दधिक्राव्ण इति ।
अस्यात्रिर्ऋषिरनुष्टुप्छन्द इन्द्रो देवता दधिप्राशने विनि-
३ १ २ ३ १— २र ३ १ २
योगः । दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
३ २ ३ १ २ ३ २ ३ १ २
सुरभि नो मुखाकरत्प्र ण आयूंँषि तारिषत् । ततः
समाचान्ताः शिष्याः पङ्क्त्याकारेणो पविशेयुः । एतस्मि
न्नेवकाले आचार्य्योऽपि प्रति सरबन्धनादि कुर्य्यात् । ततः
आचार्य्योऽग्न आयाहीत्याद्यृक्त्रयं तान्येव त्रीणि सामानि
२ ३ १ २ ३ १ २
स्वपठनादनु शिष्यान्पाठयेत् । अग्न आयाहि वीतये
३ २ ३ १ २ १- २र ३ १ २
गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ १ ॥
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३
त्वमग्ने यज्ञानांँहोता विश्वेषांँहितः । देवेभिर्मानुषे
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
जने ॥ २ ॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं ।

अस्य यज्ञस्य सुक्रतुम् । ओं ओग्नायि । आयाही३वोयि-
तोयाऽ२यि । तोयाऽ२यि । गृणानोह् । व्यदातोयाऽ२यि ।
तोयाऽ२यि । नायिहोतासाऽ२३ । त्साऽ२यिवाऽ२३४औ
होवा । ही२३४षी ॥ १ ॥ अग्नआयाहिवी । तयायि ।
गृणानोहव्यदाताऽ२३यायि । निहोनासत्सिबर्हो२३यि-
षी । बर्होऽ२यिषाऽ२३४औ होवा । बर्हो३षीऽ२३४५ ॥२॥
अग्न आयाहि । वा५यितयायि । गृणानोहव्यदा१ता३ये ।
निहोता २३४सा । त्साऽ२३यिबा३ । हाऽ२३४यिषो३हाइ ।
एवं पठित्वा ब्राह्मणभोजनपूर्णपात्रादिसङ्कल्पं कृत्वा वाम-
देव्यं गायेत् ॥ इत्युपाकर्मप्रयोगः ॥

अर्थ—सब लोग दाहिने हाथ में "ग़रक्षत नो०" इन मन्त्रों को पढ़ते हुए रक्षा बान्धे । इस रक्षा सूत को सुवर्ण और जौ की पोटरी आदि से बहुत सुन्दर बनाना चाहिए । "धानावन्तं०" मन्त्र को पढ़ते हुए एक जौ को निगल जावें । आचमन न करें । "दधि क्राव्णो०" मन्त्र को पढ़ते हुए दही खावें । सर्व शिष्य आचमन कर पक्तयाकार में बैठें । इसी समय आचार्य भी रक्षा बन्धन कर लेवें । "अग्न आयाहि०" मन्त्रों को उच्चस्वर से शिष्यों को पढ़ाकर ब्राह्मण भोजन का संकल्प करे । ब्रह्मा को पूर्णपात्र दक्षिणा प्रदान करे और वामदेव्य साम का गान कर उपाकर्म कृत्य को समाप्त करे । यही उपाकर्म का प्रयोग है ।

एवमुपाकरणं कृत्वा तद्दिनमारभ्याध्ययनं न कार्य्यं, किन्तु हस्तनक्षत्रयुक्तदिनं काङ्क्षन्ते, न पठन्तीत्यर्थः। आरण्यकादीनामुपाकरणं येषां दक्षिणायने प्रतिषिध्यते, उदगयने च विधीयते, तेषांमुदगयन उपाकृत्य पक्षिणीं रात्रिं काङ्क्षन्ते न पठन्तीत्यर्थः। "उक्तयोरुपाकरणयोस्त्रिरात्रमनध्यायं मन्यते" केचिदाचार्याः। अथवा, श्रावण्यां पौर्णमास्यामुपाकृत्य न पठन्ति यावद्भाद्रपदो हस्तः।

अर्थ—पूर्वोक्त रित्यानुसार उपाकर्म कर वेद पढ़ना आरम्भ करे। परन्तु उपाकर्म दिन से दूसरे दिन तक विश्राम कर लेवे। जिस नक्षत्र में उपाकर्म किया गया हो उस नक्षत्र युत दिन में अनध्याय रक्खें। जिन महा नाम्निक व्रत करने वाले ब्रह्मचारियों का उपाकर्म सूर्य के उत्तरायण रहते हुए बन में करने की विधि है, उन्हें भी उपाकर्म दिन से दूसरे दिन तक अनध्याय रखना चाहिए। कुछ आचार्यों का मत है कि उपाकर्म दिन से तीन दिन का अनध्याय करना चाहिए। अथवा श्रावण मास की पूर्णमासी को उपाकर्मकर भाद्र मास में हस्त नक्षत्र युत आने वाले दिन तक अनध्याय रक्खे।

पौष्यामुदगयने पुष्यनक्षत्रयुक्ततिथावुत्सर्जनम्। आरण्यकादिग्रन्थाध्ययनायोदगयन उपाकरणपक्षे, भाद्रपदे तैष्यां तिथावुत्सर्जनम्। उत्सर्जनप्रयोग उपाकर्मप्रयोगवत् ज्ञेयः।

अर्थ—दूसरा, उत्सर्जन कर्म होता है। उसे सूर्य के उत्तरायण होने पर पौष की पुष्य नक्षत्रयुक्त पूर्णमासी क [illegible] । आर-

एयार्चिक ग्रन्थों के अध्ययन के लिए सूर्य उत्तरायण के समय उपाकरण तथा भाद्र मास में पुष्य नक्षत्र युत दिन में उत्सर्जन करना चाहिए। उत्सर्जन कर्म का भी वही प्रयोग है जो उपाकरण का है।

स यथा। ततस्तद्दिनमारभ्य भाद्रपदमासीयहस्तादधस्तनपुष्यनक्षत्रं यावद्गृहीतानामृषीणां प्रत्यहं पुष्यनक्षत्रयुतेऽहनि प्रातरेव सशिष्याः प्राङ्मुखा उदङ्मुखा वा ग्रामाद्बहिर्नद्यादौ गत्वा प्रत्यहं पूजनं करिष्ये इति सङ्कल्प्य, यथाविधि स्थापितानृषीन्पूजयेत्। ततो देशकालौ सङ्कीर्त्य छन्दसामाप्यायनार्थं, यातयामत्वदोषनिवृत्तये, वेदोत्सर्गकर्मणि ऋषीणां पूजनं तर्पणञ्च करिष्ये इति सङ्कल्प्यावाहनं विना पूर्ववदृषीन् सम्पूज्य तथैव तर्पयित्वा पुनः सपूज्य ऋषीन् प्लवसाम्ना प्लावयेत्। हा। वो३हा। वो३हा३। हा। ओ२३४ वा। हायि। पूनाना२३४ः सो। माधारा२३४या। आपोवा२३४सा। नोअर्षा२३४सी। आरत्ना२३४धाः। योनीमा२३४र्त्तो। स्यासीदा२३४सी। उत्सोदा२३४यिवो। हायिरण्या२३४याः। हा। वो३हा। वो३हा३। हा। ओ२३४ वा। हा३४औ होवा। ए३। अतिविश्वानिदुरिता-

२र २३ १ १ १ र १
तरेमा२३४५ । प्लवोन्वहं भवति समुद्रं वा एते प्रस्नान्तियें संवत्सरमुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत्प्लवो भवति स्वर्गस्य लोकस्य समष्ट्यया अतिविश्वानि दुरितातरेमेति यदेवैषां दुष्टुतं दुःशस्तं तदेतेन तरन्ति । ततो निमज्याचम्य गृहमागच्छेयुः । तत आपुनरुपाकरणाच्छन्दसामनध्यायोऽन्यत्र ब्रह्मयज्ञात् । इत्युत्सर्ज्जनप्रयोगः ॥

अर्थ—आचार्य उपाकरण दिन से भाद्र मास में हस्त नक्षत्र से युक्त आने वाले दिन से पहले जितने दिन पुष्य नक्षत्र युत मिले उस दिन प्रातःकाल शिष्यों को साथ लेकर ग्राम के पूर्व अथवा उत्तर नदी आदि जलाशय पर चला जावे। आचमन आदि कृत्य कर उपाकरण में लिखी हुई विधि से ऋषियों की पूजा करें। देश काल आदि स्मरण के पश्चात् "छन्द सामाध्यायनार्थं०" वाक्य योजना के साथ संकल्प करे। बिना आवाहन पहले उपाकरण में लिखी हुई विधि से ऋषियों का पूजन करे। तर्पण कर पुनः पूजन करे। "हा। वो ३ हा०" मन्त्र से उन्हें जल में तैरा देवे।

प्लवन क्रिया नित्य होती है। जो लोग इस प्लवन कृत्य को समु में करते हैं, अथवा जो समुद्र में एक वर्ष तक स्नान करते हैं उनका स्वर्ग के अयोग्य समस्त दोष दूर हो जाता है।

इस प्रकार गुरु शिष्य को स्नान आचमन कर गृह को जाना चहिए। उपाकर्म के पश्चात् अनध्याय होगी परन्तु ब्राह्मयज्ञ के निमित्त से वेद पाठ किया जावेगा। यही उत्सर्जन प्रयोग है।

ब्रह्मचारिणां, गृहस्थानां, वानप्रस्थानां, चोपाकर्म्मोत्सर्ज्जने तावदावश्यके। अन्यथाऽधीतवेदानां यातयामतास्यात्। नतोऽनध्याया उच्यन्ते। मेघाच्छादनयुक्तदिने छन्दसामध्ययनं न कार्यम्। विद्युत्स्तनयित्नुवर्षणेषु जातेष्वनध्यायः। उल्कापाते, भूमिचलने, उपरागद्वये च दिनमेकमुत्तरमनध्यायः। निर्घातेऽनध्यायः। वक्ष्यमाणासु चतसृष्वष्टकास्वमावास्यायां, पौर्णमास्यां, चतुर्दश्यां, नाध्यायनम्। कार्तिक्यां फाल्गुन्यामाषाढ्यां च पौर्णमासोप्रतिपदोत्तरद्वितीयां नाध्ययनम्। उक्तानध्यायोऽहोरात्रम्। सद्ब्रह्मचारिणि, श्रोत्रिये च, मृतेऽहोरात्रमध्ययनं वर्ज्जयेत्। स्वदेशराजनि च मृतेऽहोरात्रमनध्यायः। आचार्य्ये दिवं गते त्रिरात्रमध्ययनं वर्ज्जयेत्। अनुकूलशिष्ये मृते त्वहोरात्रमनध्यायः। गीतवाद्यरोदनातिवातेषु तत्कालेऽनध्ययनम्। शिष्टाचारादन्येऽप्यनध्याया ज्ञातव्याः॥

अर्थ—उपाकर्म और उत्सर्जन की आवश्यकता ब्रह्मचारी, गृहस्थ और वानप्रस्थ इन तीनों के लिए है। ऐसा न करने से वेद का अभ्यास ;बहुत दिन छुटने से विस्मरण होने की संभावना होती जाती है।

नीचे अनध्याय की व्यवस्था लिखते हैं। केवल बादल लगा हो तो सामवेद का पढ़ना पढ़ाना बन्द न करे परन्तु जब बिजुली चमके अथवा वृष्टि होने लगे तो अनध्याय कर देना चाहिए। लूक्क गिरने पर, भूकम्प होने पर, सूर्य और चन्द्रग्रहण होने पर

एक दिन का अनध्याय करना चाहिए। बिजुली गिरने पर दूसरे दिन उसी समय तक अनध्याय होगी जिस समय गिरी हो। पौष, माघ और फाल्गुन की कृष्णा अष्टमी तिथि को अष्ट का कृत्य होती है। उनमें वेद का पढ़ना पढ़ाना बन्द रक्खे। अमावास्या, पौर्णमासी और चतुरदशी तिथियों को अनध्याय करना चाहिए कार्त्तिक, फाल्गुन और आषाढ़ की पूर्णमासी प्रतिपद और द्वितीया को भी अवश्य अनध्याय रखना चाहिए। ये उपरोक्त अनध्यायें एक दिन और रात्रि की होती हैं। कोई ब्रह्मचारी अथवा वेदपाठी का देहान्त हो जावे तो एक दिन रात्रि का अनध्याय करना चाहिए। अपने देश के राजा के देहान्त हो जाने पर भी एक दिन रात्रि का अनध्याय कर्त्तव्य है। आचार्य्य के देहान्त होने पर तीन दिन, शिष्य के मृत्यु में एक दिन और रात्रि का अनध्याय करना चाहिए। गाने, बजाने, रोदन तथा प्रबल अवा (आँधी) चलना इत्यादि कार्य जब तक होते रहें तब तक के लिए अनध्याय करना चाहिये। शिष्टाचार के अनुसार और भी अनध्यायें होती हैं।

अथ नैमित्तिकप्रायश्चित्तान्युच्यन्ते। दिव्यन्तरिक्षभौमाख्यत्रिविधोत्पाते दम्पत्योः प्रायश्चित्तम्। दोषविनिवृत्तये प्रायश्चित्तानुपदेशाद्व्याहृतिचतुष्टयहोमः। अथ वा, ग्रन्थान्तरोक्ततीर्थस्नानाभिषेकादिरूपं कुर्यात्। तत्रेतिकर्त्तव्यताकलापस्तत एवाधिगन्तव्यः। गृह उपरितनवंशे, मध्यमस्तम्भे वा, मणिके वा, भिन्ने व्यस्तसमस्ताभिर्व्याहृतिभिश्चतस्र आज्याहुतीः कुर्यात्। दुस्वप्नेषु सञ्जातेष्वद्य नो देव सवितरित्येतामृचं जपेत्। मन्त्रस्य प्रजापतिर्ऋषिर्गायत्रीछन्दस्सविता देवता जपे विनि-

योगः । अद्य नो देव सवितः प्रजावत्सावीः सौभगम् । पराद्दुष्वप्न्यं सुव । अग्नेयात्र न मम । तत्तत्कर्मसमाप्तौ सचिनस्याग्नेयूपस्य च स्पर्शे, कर्णक्रोशे, नेत्रस्फुरणे, सूर्योदये सूर्यास्तसमये वा निद्रायामिन्द्रियाणां निषिद्धविषयसम्बन्धे च, पुनर्मा मैत्विन्द्रियमित्येताभ्यां मन्त्राभ्यामाज्याहुतीर्जुहुयात् । अनयोर्मन्त्रयोः प्रजापतिर्ऋषिर्यजुषी अग्निर्देवतेन्द्रियापचारे प्रायश्चित्तकर्मणि समित्प्रक्षेपे आज्यहोमे वा विनियोगः । पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्द्रविणमैतु मा पुनर्ब्राह्मणमैतु मा स्वाहा । पुनर्मनः पुनरात्मा म आगात् पुनश्चक्षुः पुनश्श्रोत्रं म आगात् वैश्वानरो अदब्धस्तनूपा अन्तस्तिष्ठतु मे मनोऽमृतस्यकेतु स्वाहा । उभयत्राग्नय इदं न मम । आज्यलिप्ते समिधौ वोक्तमन्त्राभ्यामादध्यात् । समिदाधाने क्षिप्रहोमविधिः । आज्यहोमे आज्यतन्त्रम् । लघुष्वमेध्यादिदर्शनादिषु मानसेषु च पापेपूक्तयोर्मन्त्रयोर्जपं वा कुर्यात् । अन्येषामपि साम्नामध्ययने सामान्यब्रह्मचर्य्यव्रतम् ।

अर्थ—जो दैवात् अनुचितकार्य हो जाते हैं उन्हें नैमित्तिक कहते हैं । अथ उन्हीं के प्रायश्चित्तों को लिखा जाता है । यदि अन्तरीक्ष अथवा पृथ्वी पर किसी प्रकार अशुभ घटना उपस्थित हो जावे तो गृह स्वामियों को सपत्निक प्रायश्चित्त करना चाहिए ।

ऐसे प्रायश्चित्तों के लिए गायत्री मन्त्रों से चार घृताहुति प्रदान करे। अथवा अन्य ग्रन्थान्तरों में उपदिष्ट तीथ यात्रा आदि से भी ऐसे नैमित्तिक प्रायश्चित्तों की निवृत्ती हो जाती है। ऐसे यात्रा आदि की बिधियों को भी ग्रन्थान्तर से जानना चाहिए* ।

यदि गृह के धरन के बांस फट जावे अथवा गृह मध्य का खम्भा टूट जावे या जल का मटका फूट जावे तो व्यस्त और समस्त व्याहृतियों से घृताहुति प्रदान करे।

यदि सोते समय दुखद स्वप्न देखे तो "अद्यनोदेव०" मन्त्र का संहिता पाठ के अनुसार जाप करे। यदि सुरक्षित अग्नि यूप (स्तम्भ जो सोम आदि यज्ञों में महावेदी के समीप में गाढ़ा जाता है) का स्पर्श करे या कानों में निष्कारण किसी प्रकार का शब्द सुनाई परे, या नेत्र फरकने लगें, या सूर्य्योदय और अस्त होने के समय सो जावे या निषिद्ध भावना से इन्द्रिय स्पर्श करे तो "पुनर्म्मामैत्विन्द्रियं०" मन्त्रों से घृत की आहुतियों को प्रदान करे। दोनों मन्त्रों में "अग्नय इदं न मम" त्याक करे। यदि आज्य तन्त्र से घृताहुति न कर सके तो क्षिप्र होम बिधि से घी पोत कर समिध की आहुति प्रदान कर देवे। किसी अपवित्र वस्तु का स्वप्न देखे अथवा मन में किसी प्रकार की पाप भावना उत्पन्न हो परन्तु उसे किया न हो तो ऐसी दशा में भी "पुनर्म्मा०" इन मन्त्रों का जप करे।

---

* तपो वनेषु तीर्थेषु नदीप्रस्रवणेषु च। एतेषु ख्यापनेन पुण्यं गत्वा तु सागरम्। दश योजन विस्तीर्णं शत योजनमायतम्। रामचन्द्रसमादिष्टं नल-संचय सचितम्। सेतुं दृष्ट्वा विमुद्धात्मा त्ववगाहेत सागरम्। पराशर स्मृति। अ० ११ श्लो० ६८

इत्थं साङ्गं वेदमधीत्य, गुरवे दक्षिणां दत्वा, विवाहं कुर्यात् । कौथुमीयानां के वा ? ग्रन्था अध्येतव्या इति-चेदत्राह 'कश्चित्' । "छिपञ्चाशद्विमे ग्रन्थाश्शाखायाः कौथुमेरिह । प्रोक्ताः सामोद्धवा यस्मात्तस्मात्ते स्मार्त्त सुनिश्चिताः ॥ १ ॥ तस्माद्वै सामशाखायां ग्रन्थभेदो निगद्यते । श्रौतस्मार्त्तादिते यस्मान्न मुक्तं कथञ्च न ॥ २ ॥ वेयारण्यकमूहोऽत्र रहस्यं गानमुच्यते । छन्दस्यारण्यके चैवं मन्त्राम्नोत्तरकास्मृताः ॥ ३ ॥ छन्दस्यादित्रयं स्तोभः स्पदं स्याच्चतुष्टयम् । ताण्ड्यः षड्विंशकं सामविधानार्षेयके तथा ॥ ४ ॥ देवताध्याय-वंशाख्यास्संहितोपनिषत्तथा । अष्टमोपनिषच्चैव ब्राह्मणे समुदीरिताः ॥ ५ ॥ नारदी लोमशी शिक्षा गौतमो चेति-वै त्रिधा । कल्पसूत्रं तथा क्षुद्रं लाट्यायनकमेव च ॥६॥

अर्थ—गोदानिक व्रत प्रयोग से आरम्भ कर उत्सर्जन प्रयोग तक साम वेद के विशेष विशेष ग्रन्थों के अध्ययन और व्रतों का उपदेश किया गया है। वेदों के सामान्य ग्रन्थों के अध्ययन में सा-मान्य ब्रह्मचर्य्य व्रत का पालन करना चाहिए ।

उपरोक्त विधि से वेदों का ध्ययनन कर और गुरु को दक्षिणा देने के पश्चात् गृहस्थ आश्रम में प्रवेश करने के लिए विवाह संस्कार करे । वेज, आरण्यक, उह्य ऊह और रहस्य साम वेद में गान के ग्रन्थ हैं । छन्दस्यआर्चिक, आरण्यार्चिक और उत्तरार्चिक संहिता के ग्रन्थ हैं ।

कौथुमी शाखाध्यायी द्विजों के लिए कौन कौन से ग्रन्थ पठनीय हैं! इस प्रश्न के उत्तर में कुछ लोगों के वचन उधृत किए जाते हैं। ये कौथुमी शाखा के ५२ ग्रन्थ इस लिए बताए गये हैं कि उन से श्रौत और स्मार्त्त कर्म के प्रयोग निश्चित हो जाते हैं। इस कारण उपरोक्त ग्रन्थों को पृथक् पृथक् अंकित कर दिया जाता है इनके अध्ययन से किसी को श्रौ और स्मार्त्त कर्म्म करने में भ्रम न होगा। वेञ, आरण्यक, ऊह और रहस्य अथवा ऊह्य ये चार ग्रन्थ साम गान के हैं। इनके मूल वे ही मन्त्र हैं जो छन्दस्यार्चिक, आरण्यार्चिक और उत्तरार्चिक संहिता में हैं। साम संहिता की उपरोक्त नामों से प्रसिद्ध तीन और एक पदपाठ एवं चार ग्रन्थ संहिता के हैं। ताण्ड्य, षड्विंशक, सामविधान, आर्षेयक, दैवत, वंश संहितोपनिषद् और उपनिषद् ये आठ सामवेद के ब्राह्मण ग्रन्थ हैं। नारदीय, लोमशीय और गौतमीय ये तीन शिक्षा के ग्रन्थ हैं। लाट्यायन और क्षुद्र (द्राहायण) कल्प सूत्र हैं।

उपग्रन्थः पञ्चविधो निदानं ताण्ड्यलक्षणम्। अनुपरस्थादनुस्तोत्रं कल्पानुपदमेव च ॥७॥ एतद्दशविधं सूत्रं सामगेषु च विश्रुतम्। ऋक्तन्त्रं सामतन्त्रञ्च सञ्ज्ञाकरणमेव च ॥ ८ ॥ धातुलक्षणकञ्च स्यादिति व्याकरणानि च। अनुक्रमणिका चेति नैगेयश्च ततः परम् ॥ ९ ॥ फुल्लं गोभिलगृह्यञ्च मन्त्रलक्षणकं तथा। गायत्र्यादिविधानञ्च ततस्तोभानुसंग्रहः ॥१०॥ छन्दोगपरिशिष्टं तु गृह्यासङ्ग्रह एव च श्राद्धकल्पं ततो वेद्यासाधनं गोभिलीयकम् ॥ ११ ॥ स्नानविधिरुपाकर्म श्रावणेन परो

विधिः । द्विपञ्चाशदिमे ग्रन्था वृषोत्सर्गान्तगाः स्मृताः” ॥ १२ ॥ इति कौथुमशाखायां ग्रन्थसंख्या यथाक्रमात् । एतानधीत्य निखिलं वेदोक्तं ज्ञातुमर्हति ॥

अर्थ—निदानम्, ताण्ड्यलक्षणम्, अनुपत्, स्तोत्र और कल्प अनुपद सामवेद उपग्रन्थ में हैं। ऋग् तन्त्र, सामतन्त्र, संज्ञाकरण, धातुक्षण (ये व्याकरण के हैं), अनुक्रमणिका, नैगेय, फुल्ल, गोभिलगृह्यसूत्र, मन्त्रलक्षण और गायत्री आदि मन्त्र विधान ये भी दश उपग्रन्थ में हैं। छन्दोगपरिशिष्ट, गृह्या संग्रह, श्राद्धकल्प, वेदीमानकरण, स्नान विधि उपाकर्म, श्रवणाक, वृषोत्सर्ग इत्यन्त ५२ ग्रन्थ साम वेद संबन्धी बताए गए हैं, जिन्हें कौथुमीय शाखा ध्यायी द्विजों को अध्यतन करना चाहिए। उपरोक्त ग्रन्थों का अध्ययन कर द्विज वेदोपदेश के जानने के योग्य होता है।

उक्तानेतान् ग्रथानधीत्य, ततो वैदिकान्धर्म्मान्विचार्य, गुरुपादयोर्दक्षिणां समर्प्य, कन्यामुद्वाहाय निश्चित्य, ‘उद्वाहायाभ्यनुजानातु भवानाचार्य, इति पृष्ट्वाऽनुज्ञातो ब्रह्मचारी स्नात्वा समावृत्तो दारानवश्यमुद्वहेत् । अलाभे तु कन्याया न स्नायात् । यावज्जीवं ब्रह्मचारी भवेत् । अथ वा, ब्रह्मचर्य्यात्सन्न्यसेत् । न हि कदाचित्स्नात्वा चिरं तिष्ठेदनाश्रमित्वापत्तेः । तच्चानिष्टम् । “अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विज” इति सुदर्शनभाष्योक्तत्वात् ।

"यस्य दत्ता भवेत्कन्या वाचा सत्येन केनचित् । सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा" इति कर्मप्रदीपोक्तेश्च । अत्र केचित् । "विवाहेच्छाया अभावेऽपि कलौ दीर्घकालब्रह्मचर्यस्य क्वचित्क्वचिन्निषेधात्स्नानं कर्त्तव्यमिति" वदन्ति । मातुस्सपिण्डां सगोत्राञ्च कन्यां नोद्वहेत् । "कन्योद्वाहश्श्रेष्ठ" इति गोभिलाचार्योक्त्या रोहिण्या गौर्य्याश्च विवाहो न श्रेष्ठ इत्यवगम्यते ।

अर्थ—उपरोक्त ग्रन्थों का अध्ययन कर वैदिक धर्म्म का विचार करे। गुरु के चरणों पर दक्षिणा समर्पित कर विवाह संस्कार का निश्चय करे। द्वितीय आश्रम में प्रविष्ट होने के लिए गुरु से अनुमति की प्रार्थना करे और उनकी आज्ञा पाने पर समावर्त्तन स्नान करे। उद्वाह संस्कार विधि से स्त्री का पाणिग्रहण कर गृहस्थ आश्रम का आरम्भ करे। यदि किसी कारण वसात् विवाह संस्कार में असमर्थ हो तो आजीवन ब्रह्मचर्य्य व्रत का पालन करे। अथवा संसार से चित्त उपराम हो गया हो तो समावर्तन स्नान कर संन्यास आश्रम में चला जावे। द्विजों को समार्त्तन स्नान कर अधिक दिन तक अनाश्रमी रहना अच्छा नहीं है। सुदर्शन भाष्य में लिखा है कि "द्विज को एक दिन भी अनाश्रमी नहीं रहना चाहिए।" कर्मप्रदीप में लिखा है कि 'जिस ब्रह्मचारी को लोग कन्या-प्रदान करने का वचन देते हों उसी को ब्रह्मचर्य्य व्रत की अन्तिम समिधाहुति प्रदान कर समावर्तन स्नान करना चाहिए। यदि विवाह की सम्भावना न हो तो आजीवन ब्रह्मचर्य्य व्रत का पालन करना ही श्रेयस्कर है।" सकुछ लोगों की स्मति है कि "विवाह की सम्भावना न होने पर भी समावर्त्तन स्नान कर लेवे'

कारण कि कलि में अधिक दिन ब्रह्मचर्य्य व्रत पालन का निषेध है।" परन्तु यह वचन सर्वमान्य नही है जिस कन्या के साथ विवाह करे वह माता की सपिण्ड तथा अपने गोत्र की न होनी चाहिए। गोभिलाचार्य के मतानुसार रोहणी और गौर संज्ञक कन्याओं से विवाह करना अच्छा नहीं है किन्तु युवती कन्या से विवाह करना चाहिए।

**अथ ब्रह्मचारि व्रतलोपप्रायश्चित्तम्। स्नानदिनात्पूर्वेद्युस्तदहरेव वा कार्यम्। तत्र गोदानादीनां व्रतानां लोपे प्रत्येकमेकैकं कृच्छ्रंचरित्वा गायत्र्या शताज्याहुतीर्जुहुयात्। तथा ब्रह्मचारिणः सन्ध्याऽग्निकार्यभिक्षालोप-शूद्रादिस्पर्शनकटिसूत्रमेखलाजिनत्याग-दिवास्वापच्छत्रधारण-मालाधारणाञ्जन-पर्य्युषितान्नभोजनादि-सर्वब्रह्मचर्य्यनियमलोपप्रायश्चित्तार्थं कृच्छ्रत्रयं महाव्याहृतिहोमश्च कृत्वा स्नानं कार्य्यम्। बहुधर्मलोपे तु, स्मृत्युक्तं प्रायश्चित्तान्तरं कार्यम्।**

अर्थ—अब ब्रह्मचर्य्य व्रत के प्रतिकूल कार्य का प्रायश्चित्त लिखा जाता है। निम्नांकित प्रायश्चित्तों को ब्रह्मचारी समावर्त्तन से पहले अथवा उस दिन तक कर सकता है।

यदि गोदानिक आदि व्रतों को न किया हो तो हरेक व्रत के लिए एक एक कृच्छ्र व्रत कर गायत्री मन्त्र से घृत की सौ आहुति प्रदान करे। यदि ब्रह्मचारी साधारणत. सन्ध्योपासन, समिदाधन, भिक्षाचर्या न किया हो, शूद्रादि अनस्पृश्य का स्पर्श किया हो, कटि सूत्र, मेखला, मृगचर्मादि त्यागि दिया

हो, दिन में सो गया हो अथवा छाता, पुष्प की माला, अंजन धारण कर लिया हो अथवा वासी भोजन खाया हो तो इन सम्पूर्ण ब्रह्मचर्य व्रत के प्रतिकूल आचरणों के लिये तीन कृच्छ्र व्रत और व्याहृति से घृत की आहुति प्रदान कर समावर्त्तन स्नान करे। यदि अधिक धर्म्म का उलंघन हुआ हो तो मनु आदि स्मृतियों में उक्त प्रायश्चित करे।

**अथ प्रयोगः देशकालौ सङ्कीर्त्य मम ब्रह्मचर्यनियमलोपजनितसम्भावितदोषपरिहारेण स्नानाधिकारसम्पादनद्वारा श्रीपरमेश्वरप्रीत्यर्थमाज्यहोमपूर्वकं कृच्छ्रत्रयं तथा गोदानादिव्रतलोपे प्रतिव्रतमेकैककृच्छ्रगणनया गायत्र्या घृतहोमपूर्वकं प्रायश्चित्तमहमाचरिष्ये। इति सङ्कल्प्य विधिवदग्निं प्रतिष्ठाप्याऽऽज्यतन्त्रेण व्याहृतिहोमान्तं कृत्वा प्रधानाज्याहुतीर्जुहुयात्।**

अर्थ—अब प्रायश्चित्तों का प्रयोग लिखा जाता है। प्रथम आचमन प्राणायाम कर देश, काल, तिथि, वार इत्यादि स्मरण के पश्चात् "मम ब्रह्मचर्य०" वाक्य योजना के साथ संकल्प करे। पृष्ठ ८९ में लिखी बिधि से अग्नि स्थापन कर आज्य तन्त्र से पर्युक्षणादि कृत्य सम्पन्न करे। स्रुवा में घृत ले ले कर निम्नांकित आहुतियों को प्रदान करे।

**यथा। व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजभृगवऋषयो, गायत्र्युष्णिगनुष्टुप्बृहत्यश्छन्दांसि, अग्निवायुसूर्यप्रजापतयो देवता, आज्यहोमे विनियोगः। ओं भूः स्वाहा। अग्नये इदं न मम। ओं भुवः स्वाहा। वायव**

इदं न मम। ओं स्व स्वाहा। सूर्यायेदं न मम। भूर्भुवःस्वः स्वाहा। प्रजापतय इदं न मम। प्रजापतिर्ऋषिर्यजुरग्निर्देवता प्रायश्चित्तहोमे विनियोगः। पाहि नो अग्न एनसे स्वाहा। अग्नय इदं न मम। प्रजापतिर्ऋषिर्यजुर्विश्वेदेवा देवता प्रायश्चित्तहोमे विनियोगः। पाहि नो विश्ववेदसे स्वाहा। विश्वेभ्यो देवेभ्य इदं न मम। प्रजापतिर्ऋषिर्यजुर्विश्वेदेवा देवता प्रायश्चित्त होमे विनियोगः। यज्ञं पाहि विभावसो स्वाहा। विश्वेभ्यो देवेभ्यो इदं न मम। प्रजापतिर्ऋषिर्यजुः शतक्रतुर्देवता प्रायश्चितहोमे विनियोगः। सर्वं पाहि शतक्रतो स्वाहा। शतक्रतव इदं न मम। प्रजापतिर्ऋषिर्गायत्रीछन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः। पुनरुर्ज्जा निवर्त्तस्व पुनरग्न इषायुषा। पुनर्नः पाहि विश्वतः स्वाहा। अग्नय इदं न मम। प्रजापतिर्ऋषिर्गायत्रीछन्दोऽग्निर्देवता प्रायश्चित्त होमे विनियोगः। सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया। विश्वप्सिया विश्वतस्परि स्वाहा। अग्नय इदं न मम।

पुनर्व्यस्तसमस्तव्याहृति चतुष्टयं हुत्वा, गोदानादिव्रतलोपप्रायश्चित्तार्थं प्रत्येकमष्टोत्तरशतमष्टाविंशतिमष्टौ वा गायत्र्या आज्याहुतीश्च हुत्वा, एकैकं कृच्छ्रं चरित्वा, व्याहृतिहोमादितन्त्रशेषं समापयेत्। इति ब्रह्मचारिव्रतलोपप्रायश्चित्तप्रयोगः॥

अर्थ—इन उपरोक्त आहुतियों को प्रदान करने के पश्चात् पुनः व्याहृतिमन्त्रों से चार आहुति प्रदान करे। यदि गोदानादिक व्रत में त्रुटि हुई हो तो उनके निमित्त १०८ या २८ अथवा ६ आहुति गायत्री मन्त्र से प्रदान करे। एक एक कृच्छ्र व्रत भी करे। पूर्ववत् व्याहृति होम को प्रदान कर शेष कृत्य समाप्त करे। यही ब्रह्मचर्य व्रत में दैवात व्रत के प्रतिकूल कार्य हो जाने का प्रायश्चित्त है।

अथ स्नानप्रयोगः। अथ ब्रह्मचर्यव्रतान्ते ऐन्द्रचरुं कृत्वाऽऽचार्यगृहस्य पुरस्तादुत्तरतस्सर्वत अच्छादिते देशे प्रागग्रेषु दर्भेषूदङ्मुख आचार्य्य उपविशति, उदगग्रेषु दर्भेषु प्राङ्मुखो ब्रह्मचार्य्युपविशति। ततो नान्दीमुख श्राद्धं कुर्य्यात्। व्रीहि-शालि-मुद्ग-सर्षप-गोधूम-तिल-यवानुदकपूरिते भाण्डे निक्षिप्योष्णं कृत्वा तेन गन्धद्रव्ययुक्तेन शीतलजलमिश्रितेनोष्णोदकेनाचार्य्यो ब्रह्मचारिणमभिषिञ्चेत्। अथवा, ब्रह्मचारी स्वयमेवात्मानमभिषिञ्चेत्। अस्यैव पक्षस्य मुख्यत्वे प्रमाणमुपन्यस्यत्याचार्यः “मन्त्रवर्णो भवतीति”। अस्मिन्नभिषेकमन्त्रे ‘तेनासौ मामभिषिञ्चामी’ त्यस्मच्छब्दप्रयोगाल्लिङ्गात्। ततो ब्रह्मचारी ब्राह्मणाननुज्ञाप्य, गणेशं सम्पूज्य, परमेश्वरप्रीत्यर्थमाप्लवनं तरिष्ये इति सङ्कल्प्य, ब्रह्मचारी स्वयमञ्जलिना पूर्वोक्तमुष्णोदकमादाय ये अप्स्विति भूमावुत्सृजति। अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुरग्निर्देवता भूमौ जलप्रक्षेपणे विनियो-

गः । ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहाः । स्खलो विरुजस्तनूदूषिरिन्द्रियहा अति तान् सृजामि ॥ पुनरुदकं गृहीत्वा यदपामित्यनेन मन्त्रेण भूमौ प्रक्षिपति । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुरग्निर्देवता भूमौ जलप्रक्षेपणे विनियोगः । यदपां घोरं यदपां क्रूरं यदपामशान्तमति तत्सृजामि ॥ पुनरञ्जलिनोदकमादाय यो रोचन इतिमन्त्रेणात्मनःशिरस्यभिषेचनं कुर्वीत । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुरग्निर्देवता समावर्त्तनाभिषेके विनियोगः यो रोचनस्तमिह गृह्णामि तेनाहं मामभिषिञ्चामि ॥ पुनरुदकमादाय यशसे इतिमन्त्रेणात्मानमभिषिञ्चेत् । पूर्वमन्त्रवदृष्यादिः । यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय वीर्यायान्नाद्याय रायस्पोषाय त्विष्यै अपचित्यै ॥ पुनरञ्जलिनाऽपो गृहीत्वा येन स्त्रियमितिमन्त्रेण स्वशिरस्यभिषिञ्चेत् । अस्य मन्त्रस्य प्रजापतिर्ऋषिः पञ्चपदापङ्क्तिश्छन्दोऽश्विनौ देवते अभिषेके विनियोगः । येन स्त्रियमकृणुतं येनापामृशतं सुराम् । येनाक्षानभ्यषिञ्चतं येनेमां पृथिवीं महीं यद्वांतदश्विना यशस्तेन मामभिषिञ्चतम् । पुनरञ्जलिनोदकमादाय तूष्णीं चतुर्थमात्मानमभिषिञ्चेत् ।

अर्थ—ब्रह्मचर्य व्रत समाप्त करने के उपलक्ष्य में जो कृत्य होते हैं उन्हें समावर्त्तन संस्कार कहते हैं। इस संस्कार में ब्रह्मचारी सर्वोषधि युक्त जल से स्नान करता है। जिसे उक्त संस्कार को

समावर्त्तन स्नान कहते हैं। ब्रह्मचर्य्याश्रमव्रतोपदेश के पश्चात्, अब समावर्त्तन का प्रयोग लिखा जाता है। इस संस्कार को सम्पन्न करने के लिए आचार्य्य गृह से पूर्व अथवा उत्तर यज्ञ भूमि नियत करे। उसे चारो तरफ़ से आड़ कर देवे। पूर्वाग्र कुशासन पर उत्तर मुख आचार्य तथा उत्तराग्र कुशासन पर पूर्व मुख ब्रह्मचारी बैठे। प्रथम ब्रह्मचर्यव्रत पूर्ण कर लेने के उपलक्ष में पौर्णमास विधि के अनुसार स्थालीपाक करे। इस स्थालीपाक में विशेष कार्य ये होंगे कि पात्रासादन के समय व्रीहि, साठी, मुद्ग, सरसो, गेहूँ, तिल और जौ इन्हें एक पात्र में रखे। उसमें जल छोड़ कर अग्नि पर गरम कर लेवे। कपड़ा से छान कर कुछ ठंढा पानी भी मिला देवे। केशर आदि सुगन्ध द्रव्यों को छोड़कर एक घड़ा में चन्दन, अग्नि के पूर्व रक्खे। पूर्ण पात्र के पूर्व क्रमशः आचार्य की दक्षिणा, ब्रह्मचारी के लिए एक धोती, एक डुपट्टा, पुष्प की माला, जूता, बांस की छड़ी, इत्यादि का आसादन करे। हवि निर्वाप में "इन्द्राय त्वा जुष्टं निर्वपामि" से हविका ग्रहण और चरुस्थाली में निर्वपन करे। स्रुची में पूर्णमास विधि के अनुसार उपस्तीर्णाभिधारित चरु लेकर "ओं ऋचं साम यजामहे याभ्यां कार्माणि कृण्वते। वितेसदसि राजतो यज्ञं देवेषु वक्षतः स्वाहा। इन्द्राय इदं न मम। ओं सदसस्पति मद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिम्मेधामयासिषं स्वाहा। इन्द्राय इदं न मम। दो आहुति प्रदान करे। स्विष्टकृतादि संपूर्ण होम कृत्य को पौर्णमासवत् सम्पन्न करे। ब्रह्मा को पूर्ण पात्र दक्षिणा देवे। आचार्य को गौ, अश्व, सुवर्ण आदि दक्षिणा देकर समावर्त्तन स्नान की आज्ञा की प्रार्थना करे। गुरु आज्ञा प्राप्त कर नान्दीमुख श्राद्ध करे। गणेश पूजन, पुण्याहवाचनादि कृत्य सम्पन्न करे "परमेश्वर प्रीत्यर्थं द्वितीयाश्रमे प्रविष्टार्थं चाप्लवनं अहं करिष्ये" योजना के साथ संकल्प करे। ब्रह्मचारी स्वयं अथवा

आचार्य्य के दिए हुए जल को "ये अप्स्व०" अञ्जलि में लेवे। "यद्पाम्०" मन्त्र को पढ़ता हुआ भूमि पर छोड़ देवे। पुनः पूर्ववत् अञ्जलि में जल लेकर "यो रोचनस्तमिह०" मन्त्र को पढ़ता हुआ शिर पर छोड़ देवे। उपरोक्त विधि से जल ले लेकर "यशसे तेजसे० येन स्त्रियमकृणुतं०" मन्त्रों को भी पढ़ता हुआ दो बार शिर पर छोड़े। चतुर्थवार विना मन्त्र पढ़े जल को शिर पर छोड़कर भली भाँति स्नान कर लेवे।

तत उत्थायादित्याभिमुख आदित्यमुपतिष्ठेदुद्यन्भ्राजभृष्टिभिरित्यादिभिश्चतुर्भिर्मन्त्रैः। तद्यथा। चतुर्णां मन्त्राणां मध्ये प्रातर्लिङ्गेन मन्त्रेण प्रातरादित्योपस्थानम्। मध्यान्हे सान्तपनलिङ्गेन सायान्हे सायंलिङ्गमन्त्रेणोपस्थानम्। त्रिष्वपि कालेषु चक्षुरसीति चतुर्थमन्त्रेण तत्तत्कालोपस्थानानन्तरमुपस्थानं कुर्यात्। त्रयाणां मन्त्राणां प्रजापतिर्ऋषिर्यजुस्सूर्यो देवता सूर्योपस्थाने विनियोगः। चक्षुरसीति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दस्सूर्यो देवता सूर्योपस्थाने विनियोगः। उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् प्रातर्यावभिरस्थात्। दशसनिरसि दशसनिं मा कुर्वात्वा विशाम्यामा विश॥ चक्षुरसि चक्षुष्ट्वमस्यव मे पाप्मानं जहि सोमस्त्वा राजाऽवतु नमस्तेऽस्तु मा माहिँसीरति प्रातः। उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् सान्तपनेभिरस्थात् शतसनिरसि शतसनिं मा कुर्वात्वा विशाम्यामा विश॥ पूर्ववच्चक्षुरसीति च मध्यान्हे।

